श्रीः ।

# बृहज्ज्योतिषार्णव-हनुमदुपासनाविषयानुक्रमणिका.



| विषयाः | पृष्ठाङ्काः | विषयाः | पृष्ठाङ्काः |
|---|---|---|---|
| रुद्रयामलोक्तं हनुमत्सहस्र-नामस्तोत्रम् | १३९ | हनुमल्लक्षप्रदक्षिणाविधानम् | १८४ |
| हनुमत्स्तवराजः | १५६ | लक्षप्रदक्षिणाप्रयोगः | १८६ |
| हनुमतः शत्रुञ्जयस्तोत्रम् | १६८ | हनुमद्व्रतपूजापद्धतिः | १८७ |
| द्वितीयं हनुत्स्तोत्रम् | १७१ | हनुमद्व्रतोद्यापनविधिः | १९८ |
| हनुमदुपनिषद् | १७३ | हनुमद्व्रतकथा | २०१ |
| नानावर्णावृत्त्यायुक्तं तृतीयं हनुमत्-स्तोत्रम् | १७५ | हनुमद्व्रतोद्यापनकल्पः | २०९ |
| सुदर्शनसंहितोक्तं आंजनेयास्त्रम् | १७७ | हनुमत्सहस्रनामावलिः | २१२ |
| हनुमदघोरास्त्रम् | १८० | हनुमज्जन्ममाहात्म्यकथा | २३७ |
| | | ग्रंथसमाप्तिश्लोकाः | २४१ |

इत्यनुक्रमणिका समाप्ता ।

श्रीगणेशाय नमः ॥ वृषवाहनविघ्नेशौ हंसवाहं सरस्वतीम् । स्वेष्टं श्रीवटुकं नत्वा पितरं व्यङ्कटं ततः ॥ १ ॥ श्रीगौतमकुलोत्पन्नो ज्योतिर्विद्व्यङ्कटात्मजः। हरिकृष्णः करोत्यत्र वायुसूनोर्महात्मनः ॥ २ ॥ उपासनासंग्रहमिति शेषः। एतदुपासनायां वै साधारणमपेक्षितम् । तत्सर्वं पूर्वमेवोक्तं विज्ञेयमिह चादरात् ॥ ३ ॥ पूर्वोक्तानां पदार्थानामत्र वक्ष्याम्यनुक्रमम् । लक्षणं गुरुशिष्याणां दीक्षाग्रहणनिर्णयः ॥ ४ ॥

---

१ टिप्पणी—येषु शब्देषु उपरि अङ्काः सन्ति ते अध्यायसूचकाः सन्तीति बोध्यम् ।

पारायणविधानं चाभिषेकस्य विधानकम्। बीजानां
लक्षणं चैव पुरश्चर्याविधिस्तथा ॥ ५ ॥ स्थानस्य
निर्णयश्चैवासनस्य चविनिर्णयः। मुद्राणांलक्षणाध्या
यो मालानिर्णय एव च ॥ ६ ॥ जपस्य लक्षणं चैव ह्य
जपाजपलक्षणम्। तान्त्रिकं स्नानसंध्यादिनित्यक्र
मनिरूपणम् ॥ ७ ॥ भूशुद्धिद्वारपूजादिदेहरक्षानिरूप
णम्। भूतशुद्धिश्च प्राणानां प्रतिष्ठाविधिरेव च ॥ ८ ॥
न्यासानां निर्णयश्चैव मातृकान्यासनिर्णयः। अने
कविधन्यासानां सप्रमाणं निरूपणम् ॥ ९ ॥ अर्च
नं द्विविधं चैव वामदक्षिणभेदतः। वामेन वा दक्षि

णेन पूजनं तु यथारुचि ॥ १० ॥ पात्राणां लक्षणं चैव पात्रस्थापननिर्णयः । शुद्धिः पंचमकाराणां या वा मे परिकीर्तिता ॥ ११ ॥ पात्राणां ग्रहणं चैव तिरस्करिणिपूजनम् । अंतर्यागविधानं च वैश्वदेवनिरूपणम् ॥ १२ ॥ बहिर्यागविधानं च देवतापीठनिर्णयः । सर्वयंत्रप्रतिष्ठा च सापि भेदद्वयात्मिका ॥ १३ ॥ इष्टदेवस्थापनार्थं प्रथमं यंत्रपूजनम् । वश्याद्यनेककार्येषु यानि यंत्राणि सन्ति हि ॥ १४ ॥ तेषां चैव प्रतिष्ठा च यंत्रं सिद्धिकरं यतः । अनेकविधपूजायां भेदलक्षणवर्णनम् ॥ १५ ॥ शङ्खपात्रपूजनं च तन्माहात्म्य

निरूपणम् । उपासनाप्रभेदेन भस्मरुद्राक्षधारणम् ॥ १६ ॥ गोपीचंदनमाहात्म्यं तुलसीकाष्ठधारणम् । निर्णयश्चैव संप्रोक्तो ह्यावाहनविसर्जने ॥ १७ ॥ आसनस्य च ध्यानस्य तथार्घ्यपाद्यनिर्णयः । विधिराचमनीयस्य मधुपर्कस्य निर्णयः ॥ १८ ॥ विधिः स्नानाभिषेकस्य जलाहरणनिर्णयः । वस्त्रस्य चोपवीतस्य तथालङ्करणस्य च ॥ १९ ॥ गन्धाक्षतानां पुष्पाणां पत्राणां च विनिर्णयः । धूपदीपाविधानं च नैवेद्यस्य विनिर्णयः ॥ २० ॥ फलतांबूलयोश्चैव दक्षिणायाश्च निर्णयः । आरार्तिकमन्त्रपुष्पप्रदक्षिण

विनिर्णयः ॥ २१ ॥ प्रणामस्य प्रार्थनायास्तीर्थस्य
च विनिर्णयः । अंगपूजाऽऽवर्णपूजाबलिदानादि
निर्णयः ॥ २२ ॥ कुमारिकादिपूजायाः शक्तिपूजन
निर्णयः । स्तोत्रादिपठनं चैव तीर्थग्रहणनिर्णयः ।
॥ २३॥ होमस्य च विधानं वै कुण्डमण्डपलक्षणम् ।
तर्पणस्य मार्जनस्य द्विजसंन्तर्पणस्य च ॥ २४ ॥
विधानं च पृथक्प्रोक्तं निर्णयश्च पृथक्पृथक् । मंत्रस्य
शीघ्रसिद्ध्यर्थं विधिरुक्तो मया नृणाम् ॥ २५॥ सर्व
सिद्धिकरः साक्षान्मंत्रसंस्कारपूर्वकः । मूलिकाग्र
हणे मंत्रा दिशां नियम एव च ॥ २६ ॥ ऋतुमास

क्षंवाराणां तिथीनां नियमस्तथा । अंगुलीनिर्णय
श्चैव वंदाग्रहणनिर्णयः ॥ २७ ॥ सिद्धार्यादिचक्रमा
र्गशोधनं साधकेष्टयोः । शापोद्धारोत्कीलने च सूत
कादिविनिर्णयः ॥२८॥ नपुंसकादिभेदाश्च मंत्राणां
ये प्रकीर्तिताः । पुरश्चरणतः पूर्वकृत्यं यच्चांतिमे
तथा ॥२९ ॥ तत्सर्वमपि ग्रन्थेऽस्मिन् पूर्वमेव प्रकी
र्तितम् । आवर्णदेवतानां च यजनार्थं विशेषतः॥३०॥
उद्धारश्चैव यन्त्राणां मन्त्रोद्धारस्तथैव च । सर्वेषां
चैव देवानांगायत्रीमंत्रसंग्रहः ॥ ३१ ॥ चक्रपूजा
विधिश्चैव काम्यपूजाविधिस्तथा । नैमित्तिकार्चनवि

धिर्विशेषेण निरूपितः ॥ ३२ ॥ गर्भाधानादिसंस्का
रास्तान्त्रिकाश्च निरूपिताः । दीक्षितस्योपासकस्य
ह्यंत्येष्टिकर्मनिर्णयः ॥ ३३ ॥ कौलमार्गप्रकाशश्च
कौलखण्डनमेव च । पूजापराधाः संप्रोक्ताः स्वस्ति
कादिनिरूपणम् ॥ ३४॥ देवालयस्य मर्यादा सेवनं
च निरूपितम् । निर्णयश्चाधिकारस्य शब्दसृष्टिनि
रूपणम् ॥ ३५ ॥ षडाम्नायस्य चोत्पत्तिः पवित्र
दमनार्चनम् । मूर्तीनां लक्षणं चैव तपोमार्गनिदर्श
नम् ॥ ३६ ॥ जातिस्मरस्य चोपायाः प्रशंसा च
निरूपिता । दुष्कर्मप्रायश्चित्तानि नित्याशिक्षानिरू

पणम् ॥ ३७ ॥ शरीरस्य स्वरूपं च कामनाभेदानि र्णयः । पृथक्पृथक्कथाध्यायैः सर्वेषां निर्णयः स्फुटः ॥ ३८ ॥ परिभाषाभिधेऽध्याये केषांचिन्निर्णयस्त था । कृतस्तदनुरोधेन प्रयोगः सिद्धिदो नृणाम् ॥ ३९ ॥ अदृष्टैव विधानं तु कृतश्चेन्नैव सेत्स्यति । एषां सर्वोपासनेषु ह्युपयोगो भवेत्किल ॥ ४० ॥ तेषां सर्वपदार्थानां पूर्वमेव निरूपणम् । कृतं तस्मा द्विशेषेण दृढ्वोपासनमारभेत् ॥ ४१ ॥ सर्वे शाक्ता द्विजाः प्रोक्ता न शैवा न च वैष्णवाः । आदिदेवीमुपा सन्ते गायत्रीं वेदमातरम् ॥ ४२ ॥ तस्मादादौ प्रयत्नेन

गायत्रीं प्रयुतं जपेत् । पटलं पद्धतीवर्म तथा नाम
सहस्रकम् ॥ ४३ ॥ स्तोत्राणि चेति पंचाङ्गं देवतो
पासने स्मृतम् । कवचं देवतागात्रं पटलं देवताशिरः
॥ ४४॥ पद्धतिर्दैवहस्तौ तु मुखं साहस्रकं स्मृतम् ।
स्तोत्राणिदेवतापादौ पञ्चाङ्गंपञ्चभिः स्मृतम्॥४५॥
जपो होमस्तर्पणं च मार्जनं विप्रभोजनम् । आरा
धनं पञ्चविधं देवतानां प्रकीर्तितम् ॥ ४६॥ पंचाङ्गै
स्सहितं त्वेतद्दशाङ्गं कथ्यते बुधैः । हृदयं दीपदानं
च स्तवराजादिकं तथा ॥ ४७ ॥ मालामंत्रस्तथा
कल्पः सर्वमेतद्ब्रवीम्यहम् । उपासनाशराङ्गेषु या

प्रोक्ता पद्धतिः पुरा ॥ ४८ ॥ इष्टदेवार्चनार्थं वै द्वितीयाङ्गं च तत्स्मृतम् । तस्योपयोगिकं ह्येतत्सर्वं पूर्वं मयोदितम् ॥ ४९ ॥ सविस्तरं च तद्दृष्ट्वा कार्या पद्धतिरुत्तमा । सनिर्णयां च सर्वत्र लिखामि यदि पद्धतिम् ॥ ५०॥ तदा ग्रन्थो महानेव भवेत्तस्माच्च पूर्वतः । लिखित्वा निर्णयं पश्चात्कवचादिकमत्र वै ॥५१॥प्रवक्ष्यामि विशेषेण ग्रन्थानालोक्य यत्नतः । तस्माद्यत्नपरो भूयात्स्वस्यासिद्ध्यै न संशयः॥५२॥ इति श्रीज्योतिर्वित्कुलावतंसव्यङ्कटरामात्मजहरिकृष्णविनिर्मिते बृहज्ज्योतिषार्णवे धर्मस्कंधे उपास

नास्तवके श्रीहनुमदुपासनाध्याये उपोद्घातप्रकरणं प्रथमम् ॥ १ ॥ अथ श्रीहनुमत्कवचम् ॥ उक्तं चा नंदरामायणे ॥ रामदास उवाच ॥ एकदा सुखमासीनं शङ्करं लोकशङ्करम् । पप्रच्छ गिरिजा कान्तं कर्पूरधवलं शिवम् ॥ १ ॥ पार्वत्युवाच ॥ भगवन्देवदेवेश लोकनाथ जगत्प्रभो । शोकाकुलानां लोकानां केन रक्षाभवेद्ध्रुवम ॥ २ ॥ संग्रामे सङ्कटे घोरे भूतप्रेतादिके भये । दुःखदावाग्निसंतप्तचेतसां दुःखभागिनाम् ॥३॥ श्रीमहादेव उवाच ॥ शृणु देविप्रवक्ष्यामिलोकानां हितकाम्यया । विभीषणाय रामेण

प्रेम्णा दत्तं च यत्पुरा॥४॥कवचं कपिनाथस्य वायु
पुत्रस्य धीमतः। गुह्यं तत्ते प्रवक्ष्यामि विशेषाच्छृणु
सुंदरि ॥ ५ ॥ उद्यदादित्यसंकाशमुदारभुजविक्रम
म्। कन्दर्पकोटिलावण्यं सर्वविद्याविशारदम् ॥६॥
श्रीरामहृदयानन्दं भक्तकल्पमहीरुहम् । अभयं
वरदं दोर्भ्यां कलये मारुतात्मजम् ॥ ७ ॥ हनुमान
अनीसूनुर्वायुपुत्रो महाबलः। रामेष्टः फाल्गुनसखः
पिंगाक्षोऽमितविक्रमः ॥ ८ ॥ उदधिक्रमणश्चैव सी
ताशोकविनाशनः। लक्ष्मणप्राणदाताचदशग्रीवस्य
दर्पहा ॥ ९ ॥ एवं द्वादश नामानि कपीन्द्रस्य महा

त्मनः। स्वापकाले प्रबोधे च यात्राकाले च यः पठेत्
॥ १०॥ तस्य सर्वभयं नास्ति रणेच विजयी भवेत्।
राजद्वारे गह्वरे च भयं नास्ति कदाचन ॥ ११॥ उल्लं
घ्यसिंधोः सलिलं सलीलं यः शोकवह्निं जनकात्म
जायाः। आदाय तेनैव ददाह लङ्कां नमामि तं प्रांज
लिरांजनेयम् ॥ १२ ॥ ॐ नमोहनुमते सर्वग्रहान्
भूतभविष्यद्वर्तमानान् समीपस्थान् सर्वकालदुष्ट
बुद्धीनुच्चाटयोच्चाटय परबलान्क्षोभयक्षोभय मम
सर्वकार्याणि साधय साधय ॐ ह्रांह्रींहूंफट्। घेघेघे
ॐ शिवसिद्धं ॐ ह्रां ॐ ह्रीं ॐ हूं ॐ ह्रैं ॐ ह्रौं ॐ ह्रः

स्वाहा । परकृतयंत्रमंत्रपराहङ्कारभूतप्रेतपिशाच दृष्टिसर्वविघ्नदुर्जनचेष्टाकुविद्यासर्वोग्रभयानि निवारयनिवारय बंधबंध लुंठलुंठ विलुंचविलुंच किलिकिलिकिलि सर्वकुयंत्राणि दुष्टवाचम् ॐ हुंफट्स्वाहा ॥ ॐ अस्य श्रीहनुमत्कवचस्तोत्रमंत्रस्य श्रीरामचंद्रऋषिः । श्रीहनुमान्परमात्मादेवता । अनुष्टुप्छंदः । मारुतात्मज इतिबीजम् । अंजनीसूनुरितिशक्तिः । लक्ष्मणप्राणदातेतिकीलकम् । रामदूतायेतिअस्त्रम् । हनुमान्देवता इति कवचम् । पिङ्गाक्षोऽमितविक्रम इति मंत्रः । श्रीरामचन्द्रप्रेरणया रामचन्द्रप्री

त्यर्थं मम सकलकामनासिद्ध्यर्थं जपे विनियोगः ।
अथांगुलिन्यासः--ॐ ह्रां अंजनीसुताय अंगुष्ठाभ्यां
नमः । ॐ ह्रीं रुद्रमूर्तये तर्जनीभ्यां नमः । ॐ ह्रूं रामदू
ताय मध्यमाभ्यां नमः । ॐ ह्रैं वायुपुत्राय अनामिका
भ्यां नमः । ॐ ह्रौं अग्निगर्भाय कनिष्ठिकाभ्यां नमः ।
ॐ ह्रः ब्रह्मास्त्रनिवारणाय करतलकरपृष्ठाभ्यां नमः ।
एवं हृदयाद्यंगन्यासं कृत्वा । अथध्यानम्--ध्यायेद्
बालदिवाकरद्युतिनिभं देवारिदर्पापहं देवेन्द्रप्रमुखं
प्रशस्तयशसं देदीप्यमानं रुचा । सुग्रीवादिसमस्तवा
नरयुतं सुव्यक्ततत्त्वप्रियं संरक्तारुणलोचनं पवनजं

स्वाहा । परकृतयंत्रमंत्रपराहङ्कारभूतप्रेतपिशाच दृष्टिसर्वविघ्नदुर्जनचेष्टाकुविद्यासर्वोग्रभयानि निवारयनिवारय बंधबंध लुंठलुंठ विलुंचविलुंच किलिकिलिकिलि सर्वकुयंत्राणि दुष्टवाचम् ॐ हुंफट्स्वाहा ॥ ॐ अस्य श्रीहनुमत्कवचस्तोत्रमंत्रस्य श्रीरामचंद्रऋषिः । श्रीहनुमान्परमात्मादेवता । अनुष्टुप्छंदः । मारुतात्मज इतिबीजम् । अंजनीसूनुरितिशक्तिः । लक्ष्मणप्राणदातेतिकीलकम् । रामदूतायेतिअस्त्रम् । हनुमान्देवता इति कवचम् । पिङ्गाक्षोऽमितविक्रम इति मंत्रः । श्रीरामचन्द्रप्रेरणया रामचन्द्रप्री

त्यर्थं मम सकलकामनासिद्ध्यर्थं जपे विनियोगः।
अथांगुलिन्यासः--ॐ ह्रां अंजनीसुताय अंगुष्ठाभ्यां
नमः। ॐ ह्रीं रुद्रमूर्तये तर्जनीभ्यांनमः। ॐ ह्रूं रामदू
तायमध्यमाभ्यांनमः। ॐ ह्रैं वायुपुत्रायअनामिका
भ्यांनमः। ॐ ह्रौं अग्निगर्भायकनिष्ठिकाभ्यां नमः।
ॐ ह्रः ब्रह्मास्त्रनिवारणायकरतलकरपृष्ठाभ्यांनमः।
एवंहृदयाद्यंगन्यासं कृत्वा। अथध्यानम्–ध्यायेद्
बालदिवाकरद्युतिनिभं देवारिदर्पापहं देवेन्द्रप्रमुखं
प्रशस्तयशसंदेदीप्यमानंरुचा। सुग्रीवादिसमस्तवा
नरयुतं सुव्यक्ततत्त्वप्रियं संरक्तारुणलोचनं पवनजं

पीतांबरालंकृतम् ॥ १३ ॥ उद्यन्मार्तण्डकोटिप्रकट
रुचियुतं चारुवीरासनस्थं मौञ्जीयज्ञोपवीताभरणरु
चिशिखं शोभितंकुण्डलांकम् । भक्तानामिष्टदंतंप्रण
तमुनिजनं वेदनादप्रमोदं ध्यायेदेवं विधेयं प्लवगकु
लपतिं गोष्पदीभूतवार्धिम् ॥ १४ ॥ वज्रांगंपिंगके
शाढ्य स्वर्णकुण्डलमण्डितम् । निगूढमुपसंगम्यपा
रावारपराक्रमम् ॥ १५ ॥ स्फटिकाभं स्वर्णकान्ति
द्विभुजं च कृतांजलिम् । कुण्डलद्वयसंशोभिमुखा
म्भोजं हरिं भजे ॥ १६ ॥ सव्यहस्ते गदायुक्तं वाम
हस्ते कमण्डलुम् । उद्यद्दक्षिणदोर्दण्डं हनुमन्तं विचि

न्तयेत् ॥ १७ ॥ अथमन्त्रः—ॐनमो भगवते हनु
मदाख्यरुद्राय सर्वदुष्टजनमुखस्तम्भनं कुरु २ ॐह्रां
ह्रींहूंठंठंठंफट्स्वाहा ॥ १ ॥ ॐनमोहनुमते शोभिता
ननाय यशोलंकृताय अञ्जनीगर्भसंभूताय रामल
क्ष्मणानन्दकाय कपिसैन्यप्राकाराय पर्वतोत्पाटना-
य सुग्रीवसाह्यकरणाय परोच्चाटनाय कुमारब्रह्मच
र्याय गम्भीरशब्दोदयाय ॐ ह्रांह्रींहूंसर्वदुष्टग्रहनि
वारणायस्वाहा ॥ २ ॥ ॐनमोहनुमतेसर्वग्रहान्भूत
भविष्यद्वर्तमानदूरस्थसमीपस्थान् छिंधि छिंधि
भिंधि भिंधि सर्वकालदुष्टबुद्धिमुच्चाटयोच्चाटय परब

लान् क्षोभय क्षोभयममसर्वकार्याणिसाधय साधय ॐ ह्रांह्रींहुंफट्देहि ॐ शिवासिद्धिंॐह्रांह्रींहूंस्वाहा ॥३॥ ॐ नमो हनुमते परकृतयंत्रमंत्रपराहङ्कारभूतप्रेतापिशाचपरदृष्टिसर्व-विघ्नतर्जनचेटकविद्यासर्वग्रहभयं निवारय निवारय वधवध पचपच दलदल विलय विलय सर्वाणिकुयन्त्राणिकुट्टय२ॐ ह्रांह्रींहूं फट्स्वाहा ॥४॥ ॐनमोहनुमते पाहिपाहि एहिएहि सर्वग्रहभूतानां शाकिनीडाकिनीनां विषमदुष्टानां सर्वेषामाकर्षयाकर्षयमर्दयमर्दयछेदयछेदयमृत्यून् मारयमारय शोषय शोषय प्रज्वलप्रज्वलभूतमंडल

पिशाचमंडलनिरसनायभूतज्वर-प्रेतज्वरचातुर्थिक
ज्वरविष्णुज्वरमहेशज्वरंछिन्धि २ भिन्धिभिन्धिअ
क्षिशूलपक्षशूलशिरोभ्यन्तरशूलगुल्मशूल-पित्तशूल
ब्रह्मराक्षसकुलपिशाचकुलछेदनं कुरु प्रबलनागकुल
विषं निर्विषं कुरुकुरु झटितिझटिति॥ ॐह्रांह्रींहूंफट्
सर्वग्रहनिवारणायस्वाहा ॥ ५ ॥ ॐ नमोहनुमते
पवनपुत्राय वैश्वानरमुखाय पापदृष्टिचोरदृष्टिहनुम
दाज्ञास्फुर ॐ स्वाहा ॥ ६ ॥ स्वगृहेद्वारेपट्टकेतिष्ठ
तिष्ठेतितत्ररोगभयंराजकुलभयंनास्ति तस्योच्चारण
मात्रेण सर्वे ज्वरा नश्यन्ति ॥ ॐ ह्रांह्रींहूंफट्घेघे

स्वाहा ॥ ७ ॥ श्रीरामचन्द्र उवाच ॥ हनुमान्पूर्वतः पातु दक्षिणे पवनात्मजः । पातु प्रतीच्यां रक्षोघ्नः पातु सागरपारगः ॥ १८ ॥ उदीच्यामूर्ध्वतः पातु केसरिप्रियनन्दनः । अधस्तु विष्णुभक्तस्तु पातु मध्यं च पावनिः ॥ १९ ॥ अवान्तरदिशः पातु सीताशोकविनाशकः । लंकाविदाहकः पातु सर्वापद्भ्यो निरन्तरम् ॥ २० ॥ सुग्रीवसचिवः पातु मस्तकं वायुनन्दनः । भालं पातु महावीरो भ्रुवोर्मध्ये निरन्तरम् ॥ २१ ॥ नेत्रे च्छायापहारी च पातु नः प्लवगेश्वरः । कपोले कर्णमूले च पातु श्रीरामकिङ्करः ॥ २२ ॥

नासाग्रमञ्जनीसूनुः पातु वक्त्रं हरीश्वरः । वाचं रुद्र
प्रियः पातु जिह्वां पिङ्गललोचनः ॥२३॥ पातु दन्तान्
फाल्गुनेष्टश्चिबुकं दैत्यपादहृत् । पातु कण्ठं च दै
त्यारिः स्कन्धौ पातु सुरार्चितः ॥२४॥ भुजौ पातु
महातेजाः करौ च चरणायुधः। नखान्नखायुधःपातु
कुक्षौ पातु कपीश्वरः॥२५॥वक्षोमुद्रापहारी च पातु
पार्श्वे भुजायुधः । लङ्कानिभञ्जनःपातु पृष्ठदेशे निर
न्तरम् ॥२६ ॥ नाभिं च रामदूतस्तु कटिं पात्वनिला
त्मजः । गुह्यं पातु महाप्राज्ञो लिङ्गं पातु शिवप्रियः
॥२७॥ ऊरू च जानुनी पातु लङ्काप्रासादभञ्जनः ।

जंघे पातु कपिश्रेष्ठो गुल्फौ पातु महाबलः ॥ २८ ॥
अचलोद्धारकः पातु पादौ भास्करसन्निभः । अङ्गा
न्यमितसत्त्वाढ्यः पातु पादाङ्गुलीस्तथा ॥ २९ ॥
सर्वाङ्गानि महाशूरः पातु रोमाणि चात्मवित् ।कुमा
रः कन्यकां पातु पिङ्गाक्षः पातु वै पशून्॥३०॥वायु
सूनुः सुतान्पातु मार्गं पातु महाबली । द्रोणाचलसुर
स्थायी राजद्वारेऽपि रक्षमाम्॥३१॥जानकीशोकभ
यहृत्कुटुंबं कपिवल्लभः। रक्षाहीनं तु यत्स्थानं रक्षतां
यमाकिंकरः ॥ ३२ ॥ हनुमत्कवचं यस्तु पठेद्वि
द्वान्विचक्षणः । स एव पुरुषश्रेष्ठो भुक्तिं मुक्तिं च

विन्दति ॥३३॥ त्रिकालमेककालं वा पठेन्मासत्रयं नरः। सर्वांन्रिपून्क्षणाज्जित्वा स पुमाञ्छ्रियमाप्नुयात् ॥३४॥ मध्यरात्रे जले स्थित्वा सप्तवारं पठेद्यदि। क्षयापस्मारकुष्ठादितापत्रयनिवारणम् ॥ ३५ ॥ अश्वत्थमूलेऽर्कवारे स्थित्वा पठति यः पुमान्। अचलां श्रियमाप्नोति संग्रामे विजयं तथा॥३६॥रामाग्रे हनुमदग्रे यः पठेच्च नरः सदा। लिखित्वा पूजयेद्यस्तु सर्वत्र विजयी भवेत्॥३७॥यःकरे धारयेन्नित्यं सर्वान्कामानवाप्नुयात् ॥३८॥ बुद्धिर्बलं यशोवीर्यं निर्भयत्वमरोगता। सुदार्ढ्यं वाक्स्फुरत्वं च हनु

मत्स्मरणाद्भवेत् ॥३९॥ मारणं वैरिणां सद्यः शरणं सर्वसंपदाम् । शोकस्य हरणे दक्षं वन्दे तं रणदारुणम् ॥ ४० ॥ लिखित्वा पूजयेद्यस्तु सर्वत्र विजयीभवेत् । यः करे धारयेन्नित्यं स पुमाञ्छ्रियमाप्नुयात् ॥४१॥स्थित्वा तु बन्धने यस्तु जपं कारयति द्विजैः । तत्क्षणान्मुक्तिमाप्नोति निगडात्तु तथैव च ॥ ४२ ॥ ईश्वर उवाच ॥ भान्विन्दू चरणारविन्दयुगलं कौपीनमौञ्जीधरं काञ्चीश्रेणिधरं दुकूलवसनं यज्ञोपवीताजिनम् । हस्ताभ्यां धृतपुस्तकं च विलसद्धारावलिं कुण्डलं यश्चालंबिशिखं प्रसन्नवदनं श्रीवायुपुत्रं

भजेत् ॥४३॥ यो वारांनिधिमल्पपल्वलमिवोल्लंघ्य प्रतापान्वितो वैदेहीघनशोकतापहरणो वैकुण्ठभक्तिप्रियः। अक्षाद्यूर्जितराक्षसेश्वरमहादर्पापहारी रणे सोऽयं वानरपुंगवोऽवतु सदा योऽस्मान् समीरात्मजः ॥ ४४ ॥ वज्राङ्गं पिङ्गनेत्रं कनकमयलसत्कुण्डलाक्रान्तगण्डं दंभोलिस्तंभसारप्रहरणसुवशीभूतरक्षोधिनाथम्। उद्यल्लांगूलसत्तप्रचलचलधरं भीममूर्तिंकपीन्द्रं ध्यायेत्तं रामचन्द्रं भ्रमरदृढकरं सत्त्वसारं प्रसन्नम् ॥४५॥ वज्राङ्गं पिङ्गनेत्रं कनकमयलसत्कुण्डलैः शोभनीयं सर्वापीठयादिनाथं करतलविधृ

तं पूर्णकुम्भं दृढाङ्गम् । भक्तानामिष्टकारं विदधाति च सदा सुप्रसन्नं हरीशं त्रैलोक्यं त्रातुकामं सकलभुविगतं रामदूतं नमामि ॥ ४६ ॥ वामे करे वैरिभिदं वहन्तं शैलं परं शृङ्खलहारकण्ठम् । दधानमाच्छाद्य सुवर्णवर्णं भजेज्ज्वलत्कुण्डलमाञ्जनेयम् ॥ ४७ ॥ पद्मरागमणिकुण्डलत्विषा पाटलीकृतकपोलमण्डलम् । दिव्यदेहकदलीवनान्तरे भावयामि पवमाननंदनम् ॥४८॥ यत्रयत्र रघुनाथकीर्तनं तत्रतत्र कृतमस्तकाञ्जलिम् । बाष्पवारिपरिपूर्णलोचनं मारुतिं नमतराक्षसान्तकम् ॥ ४९ ॥ मनोजवं मारुततुल्यवेगं जिते

न्द्रियं बुद्धिमतां वरिष्ठम्। वातात्मजं वानरयूथमुख्यं
श्रीरामदूतं शिरसा नमामि ॥ ५० ॥ विवादे युद्धका
ले च द्यूते राजकुले रणे। दशवारं पठेद्रात्रौ मिताहारो
जितेन्द्रियः ॥५१॥ विजयं लभते लोके मानवेषु नरेषु
च। भूते प्रेते महादुर्गेऽरण्ये सागरसम्प्लवे ॥ ५२ ॥
सिंहव्याघ्रभये चोग्रे शरशस्त्रास्त्रपातने। शृङ्खलाब
न्धने चैव कारागृहादियंत्रणे ॥ ५३ ॥ कोपस्तंभे वह्नि
चक्रे क्षेत्रे घोरे सुदारुणे। शोके महारणे चैव ब्रह्मग्रह
निवारणे ॥ ५४ ॥ सर्वदा तु पठेन्नित्यं जयमाप्नोति
निश्चितम्। भूर्जे वा वसने रक्ते क्षौमे वा तालपत्रके

॥५५॥ त्रिगंधिना वा मष्या वा विलिख्य धारयेन्नरः । पंचसप्तत्रिलोहैर्वा गोपितः सर्वतः शुभम् ॥५६॥ करे कट्यां बाहुमूले कण्ठे शिरसि धारितम् । सर्वान्कामानवाप्नोति सत्यं श्रीरामभाषितम् ॥५७॥ अपराजितनमस्तेऽस्तु नमस्ते रामपूजित । प्रस्थानञ्च करिष्यामि सिद्धिर्भवतु मे सदा ॥५८॥ इत्युक्त्वा यो व्रजेद्ग्रामं देशं तीर्थान्तरं रणम् । आगमिष्यति शीघ्रं स क्षेमरूपो गृहं पुनः ॥५९॥ इति वदति विशेषाद्राघवे राक्षसेन्द्रः प्रमुदितवरचित्तो रावणस्यानुजो हि । रघुवरपदपद्मं वंदयामास भूयः कुलसहितकृतार्थः शर्मदं

मन्यमानः ॥ ६० ॥ तं वेदशास्त्रपरिनिष्ठितशुद्धबु
द्धिं शर्माम्बरं सुरमुनीन्द्रनुतं कपीन्द्रम् । कृष्णत्वचं क
नकपिङ्गजटाकलापं व्यासं नमामि शिरसा तिलकं मु
नीनाम् ॥६१॥ य इदं प्रातरुत्थाय पठते कवचं सदा ।
आयुरारोग्यसंतानैस्तभ्यस्तस्यस्तवो भवेत् ॥६२॥
एवं गिरीन्द्रजे श्रीमद्धनुमत्कवचं शुभम् । त्वयापृष्टं
मया प्रीत्या विस्तराद्विनिवेदितम् ॥ ६३ ॥ राम
दास उवाच ॥ एवं शिवमुखाच्छ्रुत्वा पार्वती कवचं
शुभम् । हनूमतः सदा भक्त्या पपाठ तन्मनाः स
दा ॥ ६४ ॥ एवं शिष्य त्वयाप्यत्र यथा पृष्टं तथा

मया । हनुमत्कवचं चेदं तवाग्रे विनिवेदितम् ॥६५॥
इदं पूर्वं पठित्वा तु रामस्य कवचं ततः । पठनीयं नरैर्भक्त्या नैकमेव पठेत्कदा ॥ ६६ ॥ हनुमत्कवचं चात्र श्रीरामकवचं विना । ये पठन्ति नराश्चात्र पठनं तद्वृथा भवेत् ॥ ६७ ॥ तस्मात्सर्वैः पठनीयं सर्वदा कवचद्वयम् । रामस्य वायुपुत्रस्य सद्भक्तेश्च विशेषतः ॥ ६८ ॥ उल्लंघ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः । आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ६९ ॥ इति श्रीह० बृ० ध० उपासनास्तबके श्रीहनुमदुपासना

ध्याये आनन्दरामायणोक्तहनुमत्कवचनिरूपणं नाम द्वितीयं प्रकरणम् ॥ २ ॥ श्लो० १२१ ॥छ॥छ॥

अथ श्रीपञ्चमुखीहनुमत्कवचम् ॥ उक्तं च सुदर्शनसंहितायाम् ॥ ईश्वर उवाच ॥ अथ ध्यानं प्रवक्ष्यामि शृणु सर्वाङ्गसुन्दरि । यत्कृतं देवदेवोशि ध्यानं हनुमतः परम् ॥ १ ॥ पंचवक्त्रं महाभीमं त्रिपंचनयनैर्युतम् । बाहुभिर्दशभिर्युक्तं सर्वकामार्थसिद्धिदम् ॥ २ ॥ पूर्वं तु वानरं वक्त्रं कोटिसूर्यसमप्रभम् । दंष्ट्राकरालवदनं भृकुटीकुटिलेक्षणम् ॥ ३ ॥ अस्यैव दक्षिणं वक्त्रं नारसिंहं महाद्भुतम् । अत्युग्र

तेजवपुषं भीषणं भयनाशनम् ॥ ४ ॥ पश्चिमं गारुडं वक्त्रं वज्रतुण्डं महाबलम् । सर्वनागप्रशमनं विषभूतादिकृन्तनम् ॥ ५ ॥ उत्तरं सौकरं वक्त्रं कृष्णं दीप्तं नभोपमम् । पातालसिद्धिवेतालज्वररोगादिकृन्तनम् ॥ ६ ॥ ऊर्ध्वं हयाननं घोरं दानवान्तकरं परम् । खड्गं त्रिशूलं खट्वाङ्गं पाशमंकुशपर्वतम् ॥७॥ मुष्टिद्रुमगदाभिन्दिपालज्ञानेन संयुतम् । एतान्यायुधजालानि धारयन्तं यजामहे ॥ ८ ॥ प्रेतासनोपविष्टं तं सर्वाभरणभूषितम् । दिव्यमालाम्बरधरं दिव्यगन्धानुलेपनम् ॥ ९ ॥ सर्वाश्चर्यमयं देवं हनु

माद्धिश्वतो मुखम् ॥ १० ॥ पञ्चास्यमच्युतमनेक विचित्रवर्ण चक्रं सुशङ्खविधृतं कपिराजवर्यम् । पीता म्बरादिमुकुटैरुपशोभिताङ्गं पिङ्गाक्षमाद्यमनिशं मन सा स्मरामि ॥ ११ ॥ मर्कटेशं महोत्साहं सर्वशोक विनाशनम् । शत्रुं संहर मां रक्ष श्रियं दापयमे हरिम् ॥ १२॥ हरिमर्कटमर्कटमन्त्रमिमं परिलिख्य ति लिख्यति भूमितले । यदि नश्यति नश्यति शत्रु कुलं यदि मुञ्चति मुञ्चति वामकरः ॥ १३॥ ॐ हरिम र्कटमर्कटाय स्वाहा । नमो भगवते पञ्चवदनाय । पूर्वकपिमुखे सकलशत्रुसंहारणाय स्वाहा । ॐ नमो

भगवते पञ्चवदनाय दक्षिणमुखे करालवदनाय नर
सिंहाय सकलभूतप्रेतप्रमथनाय स्वाहा । ॐनमो भ
गवते पञ्चवदनायपश्चिममुखेगरुडाय सकलविषहरा
य स्वाहा । ॐ नमोभगवते पञ्चवदनाय उत्तरमुखे
आदिवराहाय सकलसम्पत्कराय स्वाहा । ॐनमो
भगवते पञ्चवदनाय ऊर्ध्वमुखे हयग्रीवाय सकलज
नवशीकरणाय स्वाहा। अथ न्यासध्यानादिकम् ।
दशांशं तर्पणं कुर्यात् ।ॐ अस्य श्रीपञ्चमुखीहनुम
त्कवचस्तोत्रमन्त्रस्य । रामचन्द्र ऋषिः । अनुष्टु
प्छन्दः । श्रीसीतारामो देवता । मम सकलभयवि

नाशार्थे जपे विनियोगः । ॐ हं हनुमानिति बीजम्।
ॐ वायुदेवता इति शक्तिः । ॐ अञ्जनीसूनुरिति
कीलकम् ।श्रीरामचन्द्रप्रसादासिद्ध्यर्थं हनुमत्कवच
मन्त्र जपे विनियोगः । ॐ हं हनुमान् अङ्गुष्ठाभ्यां
नमः ॥ ॐ वायुदेवतात र्जनीभ्यां । ॐ अंजनीसु
ताय मध्यमा० । ॐ रामदूताय अनामिका० ।
ॐ श्रीहनुमत कनिष्ठि० ॥ ॐ रुं रुद्रमूर्तये करतल
करपृष्ठाभ्यां नमः । एवं हृदयादि ॥ ॐ पञ्चमुखीहनु
मते इति दिग्बन्धः । अथ ध्यानम्–श्रीरामचन्द्र
दूताय आञ्जनेयाय वायुसुताय महाबलाय सीता



पञ्चवक्त्ररुचिरं बालार्क कोटि...

दुःखनिवारणाय लङ्कोपदहनाय महाबलप्रचण्डाय फाल्गुनसखाय कोलाहलसकलब्रह्माण्डविश्वरूपाय सप्तसमुद्रनीरालङ्घिताय पिङ्गलनयनामितविक्रमाय सूर्यबिम्बफलसेवनाय दृष्टिनिरालङ्कृताय सञ्जीविनीनां निरालङ्कृताय अङ्गदलक्ष्मणमहाकपिसैन्यप्राणनिर्वाहकाय दशकण्ठविध्वंसनाय रामेष्टाय महाफाल्गुनसखाय सीतासमेतश्रीरामचन्द्रवरप्रसादकाय षट्प्रयोगागमपञ्चमुखीहनुमन्मन्त्रजपे विनियोगः ।

ॐ ह्रीं हरिमर्कटमर्कटाय वंवंवंवंवं वषट् स्वाहा ॥ १ ॥

ॐ ह्रीं हरिमर्कटमर्कटाय फंफंफंफंफं फट् स्वाहा ॥ २ ॥

ॐ ह्रीं हरिमर्कटमर्कटाय हुं हुं हुं हुं हुं वषट् स्वाहा ॥ ३ ॥ ॐ ह्रीं हरिमर्कटमर्कटाय खें खें खें खें खें मारणाय स्वाहा ॥ ४ ॥ ॐ ह्रीं हरिमर्कटमर्कटाय ठं ठं ठं ठं ठं स्तम्भनाय स्वाहा ॥ ५ ॥ ॐ ह्रीं हरिमर्कटमर्कटाय आकर्षिसकलसंपत्कराय स्वाहा ॥६॥ ॐ ह्रीं ऊर्ध्वमुखाय हयग्रीवाय रुं रुं रुं रुं रुं रुद्रमूर्तये पञ्चमुखीहनुमन्ताय सकलजननिरालङ्करणाय उच्चाटनं कुरु कुरु स्वाहा ॥ ७ ॥ ॐ ह्रीं ठं ठं ठं ठं ठं कूर्ममूर्तये पञ्चमुखीहनुमते परयन्त्रपरतन्त्रपरमन्त्रउच्चाटनाय स्वाहा ॥८॥ ॐ ह्रीं कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं

यंरंलंवंशंषंसंहंळंक्षं स्वाहा ॥ ९ ॥ ॐ दिग्बन्धः ।
ह्रींपूर्वे कपिमुखाय पञ्चमुखीहनुमते टंटंटंटंटं सकल
शत्रुसंहारणाय स्वाहा ॥ १० ॥ ॐ ह्रींदक्षिणमुखे प
ञ्चमुखीहनुमते करालवदनाय नारसिंहाय हांहांहां
हांहांसकलभूतप्रेतदमनाय स्वाहा ॥ ११ ॥ ॐ ह्रीं
पश्चिममुखे वीरगरुडाय पञ्चमुखीवीरहनुमते मंमंमं
मंमंसकलविषहरणाय स्वाहा ॥ १२ ॥ ॐ ह्रींउत्तर
मुखेआदिवराहाय लंलंलंलंलंसिंहनीलकण्ठमूर्तयेप
ञ्चमुखीहनुमते अञ्जनीसुताय वायुपुत्राय महाबला
यरामेष्टाय फाल्गुनसखाय सीताशोकदुःखनिवार

णाय लक्ष्मणप्राणरक्षकाय दशग्रीवहरणाय रामच
न्द्रपादुकाय पञ्चमुखीवीरहनुमते नमः ॥१३॥ भूत
प्रेतपिशाचब्रह्मराक्षसशाकिनीडाकिनीअन्तारिक्षग्रह
परयन्त्रपरतन्त्रपरमन्त्रसर्वग्रहोच्चाटनाय सकलश
त्रुसंहारणाय पञ्चमुखीहनुमान् सकलवशीकरणाय
सकललोकोपकारणाय पञ्चमुखीहनुमान् वरप्रसाद
काय महासर्वरक्षाय जंजंजंजंजं स्वाहा ॥ १४ ॥
एवं पठित्वा—य इदं कवचं नित्यं प्रपठेत्प्रयतो नरः।
एकवारं पठेत्स्तोत्रं सर्वशत्रुनिवारणम् ॥ १५ ॥
द्विवारं च पठेन्नित्यं पुत्रपौत्रप्रवर्द्धनम्।त्रिवारं तु पठे

न्नित्यं सर्वसम्पत्करं प्रभुम् ॥ १६ ॥ चतुर्वारं पठेन्नित्यं सर्वरोगनिवारणम् । पञ्चवारं पठेन्नित्यं पञ्चाननवशीकरम् ॥ १७ ॥ षड्वारं च पठेन्नित्यं सर्वसौभाग्यदायकम् । सप्तवारं पठेन्नित्यामिष्टकामार्थसिद्धिदम् ॥ १८ ॥ अष्टवारं पठेन्नित्यं सर्वसौभाग्यदायकम् । नववारं पठेन्नित्यं राज्यभोगं समारभत् ॥ १९ ॥ दशवारं च प्रजपेत्त्रैलोक्यज्ञानदर्शनम् । त्रिसप्तनववारं च राजभोगं च संभवेत् ॥ २० ॥ द्विसप्तदशवारं तु त्रैलोक्यज्ञानदर्शनम् । एकादशं जपित्वा तु सर्वसिद्धिकरं नृणाम् ॥ २१ ॥ इति श्रीह० बृ० ध० उपा०

स्तबके श्रीहनुमदुपासनाध्याये सुदर्शनसंहितायां रा
मोक्तश्रीपञ्चमुखीहनुमत्कवचनिरूपणं नाम तृतीयं
प्रकरणम् ॥ ३ ॥ श्लो० ॥ १३३ ॥ अथ श्रीएकादश
मुखहनुमत्कवचम् ॥ उक्तं चागस्तिसंहितायाम् ।
लोपामुद्रोवाच ॥ कुम्भोद्भव दयासिन्धो कृतं हनुमतः
प्रभोः । यन्त्रमन्त्रादिकं सर्वं त्वन्मुखोदीरितं मया
॥ १ ॥ दयां कुरु मयि प्राणनाथ वेदितुमुत्सहे ।
कवचं वायुपुत्रस्य एकादशमुखात्मनः ॥ २ ॥
इत्येवं वचनं श्रुत्वा प्रियायाः प्रश्रयान्वितम् । वक्तुं प्र
चक्रमे तत्र लोपामुद्रां प्रति प्रभुः ॥ ३ ॥ अगस्त्य

उवाच ॥ नमस्कृत्वा रामदूतं हनुमन्तं महामतिम् ।
ब्रह्मप्रोक्तं तु कवचं शृणु सुन्दरि सादरात् ॥ ४ ॥
सनन्दनाय च महच्चतुराननभाषितम् । कवचं कामदं
दिव्यं रक्षःकुलनिबर्हणम् ॥ ५ ॥ सर्वसम्पत्प्रदं
पुण्यं मर्त्यानां मधुरस्वरे । ॐ अस्य श्रीकवचस्यै
कादशवक्त्रस्य धीमतः ॥ ६ ॥ हनुमत्कवचमन्त्रस्य
सनन्दन ऋषिः स्मृतः । प्रसन्नात्मा हनूमांश्च देव
तात्र प्रकीर्तिता ॥ ७ ॥ छन्दोऽनुष्टुप्समाख्यातं बीजं
वायुसुतस्तथा । मुख्यात्र प्राणशक्तिश्च विनियोगः
प्रकीर्तितः ॥ ८ ॥ स्फेंबीजशक्तिधृक्पातु शिरो मे

पवनात्मजः। इति अङ्गुष्ठाभ्यां नमः। ॐ क्रौं बीजा
त्मानयनयोः पातु मां वानरेश्वरः ॥ ९ ॥ इति तर्ज
नीभ्यां नमः। ॐ क्षंबीजरूपीकर्णौ मे सीताशोक
विनाशनः। इति मध्यमाभ्यां०। ॐग्लौं बीजवाच्यो
नासां मे लक्ष्मणप्राणदायकः। इति अनामिकाभ्यां
नमः ॥ १० ॥ ॐवं बीजार्थश्च कण्ठं मे अक्षय
क्षयंकारकः। इति कनिष्ठिकाभ्यां नमः। ॐ रां
बीजवाच्यो हृदयं पातु मे कपिनायकः। इति करत
लकरपृष्ठाभ्यां नमः ॥ ११ ॥ ॐवं बीजकीर्तितः पातु
बाहू मे चाञ्जनीसुतः। ॐ ह्रांबीजं राक्षसेन्द्रस्य दर्पहा

पातु चोदरम् ॥ १२॥ सौंबीजमयोमध्यं मे पातु लङ्का
विदाहकः । ह्रींबीजधरोगुह्यं मे पातु देवेन्द्रवान्दितः
॥ १३॥ रंबीजात्मा सदापातु चोरू मे वार्धिलङ्घनः ।
सुग्रीवसचिवः पातु जानुनी मेमनोजवः ॥ १४॥ आपा
दमस्तकंपातुरामदूतोमहाबलः। पूर्वेवानरवक्त्रोमां चा
ग्नेय्यां क्षत्रियान्तकृत् ॥ १५॥ दक्षिणे नारसिंहस्तु नैर्ऋ
त्यां गणनायकः । वारुण्यां दिशिमामव्यात्खग
वक्त्रो हरीश्वरः ॥ १६ ॥ वायव्यां भैरवमुखः कौबेर्यां
पातु मे सदा । क्रोडास्यः पातु मां नित्यमीशान्यां रुद्र
रूपधृक् ॥ १७॥ रामस्तु पातु मां नित्यं सौम्यरूपी

महाभुजः । एकादशमुखस्यैतद्दिव्यं वै कीर्तितं मया ॥ १८ ॥ रक्षोघ्नं कामदं सौम्यं सर्वसंपद्विधायकम् । पुत्रदं धनदं चोग्रं शत्रुसंपत्तिमर्दनम् ॥ १९ ॥ स्वर्गापवर्गदं दिव्यं चिन्तितार्थप्रदं शुभम् । एतत्कवचमज्ञात्वा मन्त्रसिद्धिर्न जायते ॥ २० ॥ चत्वारिंशत्सहस्राणि पठेच्छुद्धात्मना नरः । एकवारं पठेन्नित्यं कवचं सिद्धिदं महत् ॥ २१ ॥ द्विवारं वा त्रिवारं वा पठेदायुष्यमाप्नुयात् । क्रमादेकादशादेवमावर्तनकृतात्सुधीः ॥ २२ ॥ वर्षान्ते दर्शनं साक्षाल्लभते नात्र संशयः । यं यं चिन्तयते कामं तं तं प्राप्नोति

पूरुषः ॥२३॥ ब्रह्मोदीरितमेतद्धि तवाग्रे कथितं महत् ॥इत्येवमुक्त्वा कवचं महर्षिस्तूष्णीं बभूवेन्दुमुखीं निरीक्ष्य। संहृष्टचित्तापि तदातदीयपादौ ननामातिमुदास्वभर्तुः॥ २४ ॥ इति श्रीह॰ बृ॰ ध॰ उपासनास्त॰ श्रीहनुमदुपा॰ ध्या॰ अगस्तिसंहितोक्तैकादशमुखहनुमत्कवचनिरूपणं नाम प्रकरणं चतुर्थम् ॥ ४ ॥ श्लो॰ १८७ ॥ अथ हनुमत्सहस्रनामस्तोत्रम॥ ऋषय ऊचुः ॥ऋषे लोहागिरिं प्राप्तः सीताविरहकातरः । भगवान् किंव्यधाद्रामस्तत्सर्वं ब्रूहि सत्वरम ॥ १ ॥ वाल्मीकिरुवाच ॥ मायामानुष

देहोऽयं ददर्शाग्रे कपीश्वरम् । हनुमन्तं जगत्स्वामी
बालार्कसमतेजसम् ॥ २ ॥ ससत्वरं समागम्य सा
ष्टाङ्गं प्रणिपत्य च । कृताञ्जलिपुटो भूत्वा हनुमा
न्राममब्रवीत् ॥ ३ ॥ हनुमानुवाच॥धन्योऽस्मि कृत
कृत्योऽस्मि दृष्ट्वा त्वत्पादपङ्कजम् । योगिनामप्यग
म्यं च संसारभयनाशनम् ॥ ४ ॥ पुरुषोत्तम देवेश
कर्तव्यं तन्निवेद्यताम् । श्रीराम उवाच ॥ जनस्थानं
कपिश्रेष्ठ कोप्यागत्य विदेहजाम् ॥५॥हतवान् विप्र
संवेशो मारीचानुगते मयि॥ गवेष्य साम्प्रतं वीर जान
कीहरणे परः ॥ ६ ॥ त्वयागम्यो न को देशस्त्वं च

ज्ञानवतांवरः।सप्तकोटिमहामन्त्रमन्त्रितावयवःप्रभुः
॥७॥ऋषय ऊचुः ॥ कोमन्त्रः किं च तद्ध्यानं तन्नो
ब्रूहि यथार्थतः।कथासुधारसं पीत्वा न तृप्यामः परं
तप ॥ ८ ॥ वाल्मीकिरुवाच॥ मन्त्रं हनुमतो विद्धि
भुक्तिमुक्तिप्रदायकम् । महारिष्टमहापापमहादुःख
निवारणम् ॥ ९ ॥ ॐ ऐंह्रीं श्रीं हनुमते रामदूताय
लङ्काविध्वंसनाय अञ्जनीगर्भसम्भूताय शाकिनी
डाकिनीविध्वंसनाय किलि किलि बुबुकारेण विभी
षणाय हनुमते देवाय ॐ श्रींह्रींह्रौंह्रांहूँफट् स्वाहा
अन्यंहनुमतो मन्त्रंसहस्रनामसंज्ञितम् । जानन्तुऋ

षयः सर्वंमहादुरितनाशनम् ॥ १० ॥ यस्य संस्मरणात्
सीतांलब्ध्वा राज्यमकण्टकम् । विभीषणाय च ददा
वात्मानं लब्धवान् यथा ॥ ११ ॥ ऋषय ऊचुः ॥ सहस्र
नामसन्मन्त्रं दुःखाद्यौघनिवारणम् । वाल्मीके ब्रूहि
नस्तूर्णं शुश्रूषामः कथां पराम् ॥ १२ ॥ वाल्मीकि
रुवाच । शृण्वन्तु ऋषयः सर्वे सहस्रनामकं स्तवम् ।
स्तवानामुत्तमं दिव्यं सदर्थस्य प्रकाशकम् ॥ १३ ॥
ॐ अस्य श्रीहनुमत्सहस्रनामस्तोत्रमालामन्त्रस्य ।
श्रीरामऋषिः ।शिरसि । अनुष्टुप्छन्दः मुखे। हनुमान्
परमात्मा देवता हृदये ॥ ह्रींश्रींह्रौंह्रांबीजानि गुह्ये ।

श्रीरितिशक्तिः पादयोः । लङ्काविध्वंसनइतिकवचं सर्वाङ्गे । किलिकिलिबुबुकारेण इति कीलकं हृदि । ममसर्वोपद्रवशान्त्यर्थं जपे विनियोगः। ऐंह्रींहनुमते रामदूताय अङ्गुष्ठाभ्यां नमः । लङ्काविध्वंसनाय तर्जनीभ्यां नमः । अञ्जनीगर्भसंभूताय मध्यमाभ्यां नमः। शाकिनीडाकिनीविध्वंसनाय अनामिकाभ्यां नमः । किलिकिलिबुबुकारेण भीषणाय हनुमते देवाय कनिष्ठिकाभ्यांनमः । ॐ ह्रीं श्रीं ह्रौं हूंफट् स्वाहा करतलकरपृष्ठाभ्यां नमः ।ॐ ऐं ह्रीं हनुमते रामदूताय हृदयाय नमः। लङ्काविध्वंसनाय शिरसे

स्वाहा । अञ्जनीगर्भसंभूताय शिखायै वषट् । शाकिनीडाकिनीविध्वंसनाय कवचाय हुम् । किलिकिलिबुबुकारेण भीषणाय हनुमते देवाय नेत्रत्रयाय वौषट् । ॐ ह्रीं श्रीं ह्रौं ह्रः अस्त्राय फट् । अथ ध्यानम् ।
प्रतप्तस्वर्णवर्णाभं संरक्तारुणलोचनम् । सुग्रीवादियुतं ध्यायेत्पीताम्बरसमावृतम् ॥ १४॥ गोष्पदीकृतवारीशं पुच्छमस्तकमीश्वरम् । ज्ञानमुद्रां च बिभ्राणं सर्वालङ्कारभूषितम् ॥ १५॥ श्रीराम उवाच ॥
हनुमान् श्रीप्रदो वायुपुत्रो रुद्रो नयोऽजरः । अमृत्युर्वीरवीरश्च ग्रामवासो जनाश्रयः ॥ १६ ॥ धनदो नि

र्गुणःकायो वीरो निधिपतिर्मुनिः । पिङ्गाक्षो वरदो वा
ग्ग्मीसीताशोकनिवारणः॥१७॥शिवःशर्वःपरोव्यक्तो
व्यक्ताव्यक्तोरुसाधनः । पिङ्गकेशः पिङ्गरोमाश्रुति
गम्यः सनातनः ॥१८॥ अनादिर्भगवान् देवो विश्व
हेतुर्नराश्रयः । आरोग्यकर्ता विश्वेशो विश्वनाथो
हरीश्वरः ॥ १९ ॥ भर्गो रामो रामभक्तः कल्याण
प्रकृतिस्थिरः। विश्वंभरो विश्वमूर्तिर्विश्वाकारोऽथ वि
श्वदः ॥ २० ॥ विश्वात्माविश्वसेव्योथ विश्वो विश्व
हरो रविः । विश्वचेष्टो विश्वगम्यो विश्वध्येयः कला
धरः ॥ २१ ॥ प्लवङ्गमः कपिश्रेष्ठो ज्येष्ठो विद्यावने

चरः ।बालो वृद्धो युवा तत्त्वं तत्त्वगम्यःसखा ह्यजः
॥ २२ ॥ अञ्जनीसूनुरव्यग्रो ग्रामस्यान्तो धराधरः।
भूर्भुवःस्वर्महर्लोको जनलोकस्तपोऽव्ययः ॥ २३॥
सत्यमोङ्कारगम्यश्च प्रणवो व्यापकोऽमलः । शिव
धर्मप्रतिष्ठाता रामेष्टः फाल्गुनप्रियः॥२४॥ गोष्पदी
कृतवारीशः पूर्णकामो धरापतिः । रक्षोघ्नः पुण्डरी
काक्षः शरणागतवत्सलः ॥२५॥ जानकीप्राणदाता
च रक्षःप्राणापहारकः । पूर्णःसत्यः पीतवासा दिवा
करसमप्रभः ॥ २६ ॥ द्रोणहर्ता शक्तिनेता शक्ति
राक्षसमारकः । रक्षोघ्नो रामदूतश्च शाकिनीजीव

हारकः ॥२७॥ बुबुकारहतारातिगर्वः पर्वतमर्दनः ।
हेतुस्त्वहेतुः प्रांशुश्च विश्वभर्त्ताजगद्गुरुः ॥२८॥ जग
न्नेता जगन्नाथो जगदीशो जनेश्वरः । जगच्छ्रितो
हरिः श्रीशो गरुडस्मयभञ्जनः ॥२९॥ पार्थध्वजो वा
युपुत्रोऽमितपुच्छोऽमितप्रभः । ब्रह्मपुच्छः परं ब्रह्म
पुच्छरामेष्ट एव च ॥३०॥ सुग्रीवादियुतो ज्ञानी वान
रो वानरेश्वरः।कल्पस्थायी चिरञ्जीवी प्रसन्नश्च सदा
शिवः ॥ ३१ ॥ सन्नतिः सद्गतिर्भुक्तिमुक्तिदः कीर्ति
नायकः । कीर्तिःकीर्तिप्रदश्चैव समुद्रःश्रीपदःशिवः
॥३२॥उदधिक्रमणो देवः संसारभयनाशनः ।वालि

बन्धनकृद्विश्वनेता विश्वप्रतिष्ठितः॥ ३३ ॥ लङ्कारिः कालपुरुषो लङ्केशगृहभञ्जनः। भूतावासो वासुदेवो वसुस्त्रिभुवनेश्वरः ॥ ३४ ॥ श्रीरामरूपः कृष्णस्तु लङ्काप्रासादभञ्जकः। कृष्णः कृष्णस्तुतः शान्तः शान्तिदो विश्वपावनः ॥३५॥ विश्वभोक्ताथ मारीघ्नो ब्रह्मचारी जितेन्द्रियः। ऊर्ध्वगो लाङ्गली माली लांगूलाहतराक्षसः ॥ ३६ ॥ समीरतनुजो वीरो वीरमारो जयप्रदः । जगन्मङ्गलदः पुण्यः पुण्यश्रवणकीर्तनः ॥३७॥ पुण्यकीर्तिः पुण्यगीतिर्जगत्पावनपावनः।देवेशोऽमितमारोथरामभक्तिविधायकः॥ ३८॥

ध्याता ध्येयो भगः साक्षी चेता चैतन्यविग्रहः। ज्ञानदः प्राणदः प्राणो जगत्प्राणः समीरणः ॥३९॥ विभीषणप्रियः शूरः पिप्पलाश्रयसिद्धिदः। सिद्धः सिद्धाश्रयः कालः कालभक्षकपूजितः ॥ ४० ॥ लङ्केशनिधनस्थायी लङ्कादाहक ईश्वरः । चन्द्रसूर्याग्निनेत्रश्च कालाग्निः प्रलयान्तकः ॥ ४१ ॥ कपीनः कपिशः पुण्यराशिर्द्वादशराशिगः । सर्वाश्रयोऽप्रमेयात्मा रेवत्यादिनिवारकः ॥ ४२ ॥ लक्ष्मणप्राणदाता च सीताजीवनहेतुकः । रामध्येयो हृषीकेशो विष्णुभक्तो जटी बली ॥ ४३ ॥ देवारिदर्पहा

होता धर्ता कर्ता जगत्प्रभुः। नगरग्रामपालश्च शुद्धो बुद्धो निरन्तरः ॥४४॥ निरञ्जनो निर्विकल्पो गुणातीतो भयङ्करः। हनुमन्तो दुराराध्यस्तपःसाध्यो महेश्वरः ॥ ४५ ॥ जानकीवनशोकादितापहर्ता पराशरः। वाङ्मयः सदसद्रूपः कारणं प्रकृतेः परः ॥४६॥ भाग्यदो निर्मलो नेता पुच्छलङ्काविदाहकः। पुच्छबद्धो यातुधानो यातुधानरिपुप्रियः ॥ ४७ ॥ छायापहारी भूतेशो लोकेशः सद्गतिप्रदः। प्लवङ्गमेश्वरः क्रोधः क्रोधसंरक्तलोचनः ॥४८॥ भक्तानुकम्पी विश्वेशो पुरुहूतःपुरन्दरः। क्रोधहर्ता तापहर्ता

भक्ताभयवरप्रदः ॥ ४९ ॥ अग्निर्विभावसुर्भास्वान्यमो नैर्ऋतिरेव च । वरुणो वायुगतिमान्वायुः कुबेर ईश्वरः॥५०॥रविश्चन्द्रः कुजः सौम्यो गुरुः काव्यः शनैश्चरः । राहुःकेतुर्मरुद्धोता धाता हर्त्तासमीरजः ॥५१॥मशकीकृतदेवारिर्दैत्यारिर्मधुसूदनः । कामः कपिःकामपालः कपिलो विश्वजीवनः ॥ ५२ ॥ भागीरथीपदाम्भोजसेतुबन्धविशारदः।स्वाहा स्वधा हविः कव्यहव्यवाहः प्रकाशकः ॥५३॥ स्वप्रकाशो महावीरो लघुश्चामितविक्रमः । उड्डीनोड्डीनगतिमान्सद्गतिः पुरुषोत्तमः ॥ ५४ ॥ जगदात्मा जग

द्योनिर्जगदन्तो ह्यनन्तकः । विपाप्मा निष्कलङ्कोथ
महान्महदहङ्कृतिः ॥ ५५ ॥ खं वायुः पृथिवी चापो
वह्निर्दिक्पाल एव च । क्षेत्रज्ञः क्षेत्रकर्ता च पल्वली
कृतसागरः ॥ ५६ ॥ हिरण्मयपुराणश्च खेचरोभूच
रोमनः । हिरण्यगर्भः सूत्रात्माराजराजोविशां पतिः
॥ ५७ ॥ वेदान्तवेद्य उद्गीथो वेदवेदाङ्गपारगः ।प्रति
ग्रामास्थितिः सद्यः स्फूर्तिदाता गुणाकरः ॥ ५८ ॥
नक्षत्रमाली भूतात्मा सुरभिः कल्पपादपः । चिन्ता
मणिर्गुणनिधिः प्रजाद्वारमनुत्तमः ॥ ५९ ॥ पुण्य
श्लोकःपुरारातिर्ज्योतिष्मान् शर्वरीपतिः । किलकि

शिरावसंत्रस्तभूतप्रेतपिशाचकः ॥ ६० ॥ ऋणत्रय
हरः सूक्ष्मः स्थूलः सूक्ष्मगतिः पुमान् । अपस्मार
हरः स्मर्ता श्रुतिर्गाथास्मृतिर्मनुः ॥ ६१ ॥ स्वर्गद्वारं
प्रजाद्वारं मोक्षद्वारं यतीश्वरः । नादरूपः परं ब्रह्म
ब्रह्मब्रह्मपुरातनः ॥६२ ॥ एकोनेकोजनः शुक्लः स्वयं
ज्योतिरनाकुलः । ज्योतिर्ज्योतिरनादिश्चसात्त्विको
राजसस्तमः ॥ ६३ ॥ तमोहर्त्तानिरालंबोनिराकारो
गुणाकरः । गुणाश्रयोगुणमयोबृहत्कायोबृहद्यशाः
॥ ६४ ॥ बृहद्धनुर्बृहत्पादो बृहन्मूर्धा बृहत्स्वनः ।
बृहद्योगीबृहन्नासोबृहद्बाहुर्बृहत्तनुः ॥ ६५ ॥ बृहद्यतनो

बृहत्कायो बृहत्पुच्छो बृहत्करः । बृहद्गतिर्बृहत्सेव्यो बृहल्लोकगतिप्रदः ॥ ६६॥ बृहच्छक्तिर्बृहद्वाञ्छाफलदो बृहदीश्वरः । बृहल्लोकनुतो द्रष्टा विद्यादाता जगद्गुरुः ॥ ६७ ॥ देवाचार्यः सत्यवादी ब्रह्मवादी कलाधरः । सप्तपातालगामी च मलयाचलसंश्रयः ॥ ६८॥ उत्तराशास्थितः श्रीदो दिव्यौषधिवशः खगः । शाखामृगः कपीन्द्रोऽथ पुराणः प्राणचञ्चुरः ॥६९ ॥ चतुरो ब्राह्मणो योगी योगगम्यः परावरः । अनादिनिधनो व्यासो वैकुण्ठः पृथिवीपतिः ॥ ७० ॥ अपराजितो जितारातिः सदानन्दद ईशितः । गोपालो गोपति

योद्धा कलिः कालः परात्परः ॥ ७१ ॥ मनोवेगी सदा योगी संसारभयनाशनः । तत्त्वदाताथ तत्त्वज्ञस्त त्त्वं तत्त्वप्रकाशकः॥ ७२ ॥ शुद्धो बुद्धो नित्ययुक्तो भक्तकारो जयद्रथः। प्रलयोऽमितमायश्च मायातीतो विमत्सरः ॥७३॥ मायानिर्जितरक्षाश्च मायानिर्मित विष्टपः। मायाश्रितश्च निर्लेपो मायानिर्वर्तकः सुखी ॥ ७४ ॥ सुखीसुखप्रदो नागो महेशः कृतसंस्तवः । महेश्वरः सत्यसन्धः शरभः कलिपावनः ॥७५॥ रसो रसज्ञःसन्मानो रूपंचक्षुःश्रुतीरवः।घ्राणंगन्धःस्पर्शनं चस्पर्शोऽहङ्कारमानगः॥ ७६ ॥नेतिनेतीतिगम्यश्च

वैकुण्ठभजनप्रियः । गिरीशो गिरिजाकान्तोदुर्वासाः कविराङ्गिराः ॥ ७७ ॥ भृगुर्वसिष्ठश्च्यवनो नारद स्तुंबुरोऽमलः । विश्वक्षेत्रो विश्वबीजो विश्वनेत्रश्च वि श्वपः॥७८॥याजको यजमानश्च पावकःपितरस्तथा। श्रद्धाबुद्धिः क्षमातन्द्रामन्त्रोमन्त्रयिता सुरः॥७९ ॥ राजेन्द्रभूपती रुण्डमाली संसारसारथिः । नित्यः संपूर्णकामश्च भक्तकामधुगुत्तमः ॥ ८० ॥ गणपः केशवो भ्राता पितामाताथ मारुतिः । सहस्रमूर्धास हस्रास्यः सहस्राक्षः सहस्रपात् ॥ ८१ ॥ कामजित् कामदहनः कामः काम्यफलप्रदः । मुद्रापहारी

रक्षोघ्नः क्षितिभारहरो बलः ॥८२॥ नखदंष्ट्रायुधो वि
ष्णुर्भक्ताभयवरप्रदः । दर्पहा दर्पदो दंष्ट्राशतमूर्तिर
मूर्तिमान् ॥ ८३ ॥ महानिधिर्महाभागो महाभर्गो
महर्द्धिदः।महाकायोमहायोगी महातेजा महाद्युतिः
॥८४॥ महाकर्मा महानादो महामन्त्रो महामतिः ।
महाशमो महोदारो महादेवात्मको विभुः ॥ ८५ ॥
रुद्रकर्मा कृतकर्मा रत्ननाभः कृतागमः । अंभोधि
लंघनः सिंहः सत्यधर्मप्रमोदनः ॥८६॥ जितामित्रो
जयः सोमो विजयोवायुवाहनः।जीवो धाता सहस्रांशु
मुकुंदो भूरिदक्षिणः॥ ८७॥ सिद्धार्थःसिद्धिदःसिद्धः

सकलः सिद्धिहेतुकः। सप्तपातालचरणः सप्तर्षिग णवन्दितः ॥ ८८ ॥ सप्ताब्धिलङ्घनो वीरः सप्तद्वीपोरु मण्डलः। सप्ताङ्गराज्यसुखदः सप्तमातृनिषेवितः ८९ सप्तस्वर्लोकमुकुटः सप्तहोत्रस्वराश्रयः। सप्तसामो पगीतश्च सप्तपातालसंश्रयः ॥ ९०॥ सप्तच्छन्दोनि धिः सप्तच्छन्दः सप्तजनाश्रयः। मेधादः कीर्तिदः शो कहारी दौर्भाग्यनाशनः ॥९१॥ सर्ववश्यकरो गर्भ दोषहा पुत्रपौत्रदः। प्रतिवादिमुखस्तम्भो रुष्टचित्तप्र सादनः ॥ ९२ ॥ पराभिचारशमनो दुःखहा बन्धमो क्षदः। नवद्वारपुराधारो नवद्वारनिकेतनः ॥ ९३ ॥

नरनारायणस्तुत्यो नवनाथमहेश्वरः। मेखली कवची खड्गी भ्राजिष्णुर्जिष्णुसारथिः ॥ ९४ ॥ बहुयोजन विस्तीर्णपुच्छः पुच्छहतासुरः। दुष्टहन्ता नियमिता पिशाचग्रहघातकः ॥ ९५ ॥ बालग्रहविनाशी च धर्मनेता कृपाकरः। उग्रकृत्यश्चोग्रवेग उग्रनेत्रः शत क्रतुः ॥ ९६ ॥ शतमन्युस्तुतः स्तुत्यः स्तुतस्तोता महाबलः। समग्रगुणशाली च व्यग्रो रक्षोविनाशनः ॥ ९७ ॥ रक्षोग्निदावो ब्रह्मेशः श्रीधरो भक्तवत्सलः। मेघनादो मेघरूपो मेघवृष्टिनिवारकः ॥ ९८ ॥ मेघ जीवनहेतुश्च मेघश्यामः परात्मकः। समीरतनयो यो

द्धा तत्त्वविद्याविशारदः।९९॥अमोघोऽमोघवृष्टिश्चा
भीष्टदोऽनिष्टनाशनः। अर्थोऽनर्थापहारी च समर्थो
रामसेवकः॥ १०० ॥अर्थी धन्योऽसुराराातिः पुण्डरी
काक्ष आत्मभूः। संकर्षणो विशुद्धात्मा विद्याराशिः
सुरेश्वरः ॥ १०१ ॥ अचलोद्धारको नित्यःसेतुकृद्रा
मसारथिः। आनन्दःपरमानन्दो मत्स्यः कूर्मो निधिः
शयः ॥ १०२ ॥ वराहो नारसिंहश्च वामनो जमद
ग्निजः। रामः कृष्णः शिवो बुद्धः कल्की रामाश्रयो
हरिः॥१०३॥नन्दी भृङ्गी च चण्डी च गणेशो गणसे
वितः। कर्माध्यक्षः सुराारामो विश्रामो जगतीपतिः

॥१०४॥ जगन्नाथः कपीशश्च सर्वावासः सदाश्रयः।
सुग्रीवादिस्तुतो दान्तः सर्वकर्मा प्लवङ्गमः ॥ १०५ ॥
नखदारितरक्षाश्च नखयुद्धविशारदः। कुशलः सुध
नः शेषो वासुकिस्तक्षकस्तथा ॥ १०६ ॥ स्वर्णवर्णो
बलाढ्यश्च पुरुजेताघनाशनः । कैवल्यदीपः कैव
ल्यो गरुडः पन्नगो गुरुः ॥ १०७ ॥ क्लिक्लिरावहतारा
तिगर्वः पर्वतभेदनः।वज्राङ्गो वज्रवज्रश्च भक्तवज्रनिवा
रकः ॥ १०८ ॥ नखायुधो मणिग्रीवो ज्वालामाली
च भास्करः । प्रौढप्रतापस्तपनो भक्ततापनिवा
रकः ॥ १०९ ॥ शरणं जीवनो भोक्ता नानाचेष्टोऽथ

चञ्चलः । स्वस्थस्त्वस्वास्थ्यहा दुःखशातनः पव
नात्मजः ॥ ११० ॥ पावनः पवनः कान्तो भक्ताङ्गः
सहनो बलः । मेघनादरिपुर्मेघनादसंहतराक्षसः
॥ १११ ॥ क्षरोऽक्षरो विनीतात्मा वानरेशः सतां
गतिः । श्रीकण्ठः शितिकण्ठश्च सहायासहनाय
कः ॥ ११२ ॥ अस्थूलस्त्वनणुर्भर्गो देवस्संसृति
नाशनः । अध्यात्मविद्यासारश्चाप्यध्यात्मकुशलः
सुधीः ॥ ११३ ॥ अकल्मषः सत्यहेतुः सत्यदः सत्य
गोचरः । सत्यगर्भः सत्यरूपः सत्यःसत्यपराक्रमः
॥ ११४ ॥ अञ्जनाप्राणलिङ्गं च वायुवंशोद्भवः श्रुतिः ।

भद्ररूपो रुद्ररूपः सुरूपश्चित्ररूपधृक् ॥ ११५ ॥
मैनाकवन्दितः सूक्ष्मदर्शनो विजयो जयः । क्रान्तदि
ङ्मण्डलोरुद्रःप्रकटीकृतविक्रमः ।११६।कम्बुकण्ठः
प्रसन्नात्मा ह्रस्वनासो वृकोदरः । लम्बोष्ठः कुण्डली
चित्रमाली योगविदां वरः ॥ ११७ ॥ विपश्चित्क
विरानन्दो विग्रहोऽनल्पशासनः । फाल्गुनीसूनुरव्य
ग्रो योगात्मा योगतत्परः ॥ ११८ ॥ योगविद्योगक
र्ता च योगयोनिर्दिगम्बरः । अकारादिक्षकरान्तवर्ण
निर्मितविग्रहः ॥ ११९ ॥ उलूखलमुखः सिद्धसंस्तु
तः प्रमथेश्वरः । श्लिष्टजंघः श्लिष्टजानुः श्लिष्टपाणिः

शिखाधरः॥ १२० ॥सुशर्मामितशर्मा च नारायणप
रायणः । जिष्णुर्भाविष्णू रोचिष्णूर्ग्रसिष्णुः स्थाणुरे
व च॥१२१॥ हरिरुद्रानुकूद्दक्षकम्पनो भूमिकम्पनः।
गुणप्रवाहः सूत्रात्मा वीतरागः स्तुतिप्रियः ॥१२२॥
नागकन्याभयध्वंसी ऋतुपर्णः कपालभृत् । अनु
कूलोक्षयोपायोऽनपायो वेदपारगः॥ १२३ ॥ अक्षरः
पुरुषो लोकनाथो रूक्षः प्रभुर्दृढः । अष्टाङ्गयोगफल
भूः सत्यसन्धः पुरुष्टुतः ॥ १२४ ॥ श्मशानस्थान
निलयः प्रेतविद्रावणश्रमः । पञ्चाक्षरपरः पञ्चमातृ
को रञ्जनध्वजः ॥ १२५ ॥ योगिनीवृन्दवन्द्यश्रीः

शत्रुघ्नोऽनन्तविक्रमः । ब्रह्मचारीन्द्रियारिपुर्धृतदण्डो
दशात्मकः ॥ १२६ ॥ अप्रपञ्चः सदाकारः शूरसे
नो विदारकः । वृद्धप्रमोद आनन्दः सप्तजिह्वः पति
र्धरः ॥ १२७ ॥ नवद्वारपुराधारः प्रत्यग्रः सामगा
यकः । षट्चक्रधामा स्वर्लोकोऽभयकृन्मानदो म
दः ॥ १२८ ॥ सर्ववश्यकरः शक्तिरनन्तोनन्तम
ङ्गलः । अष्टमूर्तिर्नयो नेता विरूपः स्वरसुन्दरः
॥ १२९ ॥ धूमकेतुर्महाकेतुः सत्यकेतुर्महारथः ।
नन्दिप्रियः स्वतन्त्रश्च मेखली डमरुप्रियः ॥ १३० ॥



लोहाङ्गः सर्वविद्धन्वी षड्गलः शर्व ईश्वरः । फलभुक्

फलहस्तश्च सर्वकर्मफलप्रदः ॥ १३१ ॥ धर्माध्य
क्षो धर्मफलो धर्मो धर्मप्रदोऽर्थदः।पञ्चविंशतितत्त्वज्ञ
स्तारकब्रह्मतत्परः ॥ १३२ ॥ त्रिमार्गवसतिर्भीमः
सर्वदुष्टनिबर्हणः । ऊर्ज्जस्वान्निष्कलः शूली माली
गर्जन्निशाचरः॥ १३३॥रक्ताम्बरधरो रक्तो रक्तमाला
विभूषणः । वनमाली शुभाङ्गश्च श्वेतः श्वेताम्बरो
युवा॥ १३४॥जयोऽजेयपरीवारः सहस्रवदनः कविः।
शाकिनीडाकिनीयक्षरक्षोभूतप्रभञ्जकः ॥ १३५ ॥
सद्योजातः कामगतिर्ज्ञानमुक्तिर्यशस्करः । शम्भुते
जाः सार्वभौमो विष्णुभक्तः प्लवङ्गमः ॥ १३६॥चतुर्न

वातिमन्त्रज्ञः पौलस्त्यबलदर्पहा । सर्वलक्ष्मीप्रदः श्रीमानङ्गदप्रिय ईतिनुत् ॥ १३७ ॥ स्मृतिर्बीजं सुरेशानः संसारभयनाशनः । उत्तमः श्रीपरीवारः श्रीभूरुग्रश्च कामधुक् ॥ १३८ ॥ वाल्मीकिरुवाच॥ इति नाम्नां सहस्रेण स्तुतो रामेण वातभूः । उवाच तं प्रसन्नात्मा सन्धायात्मानमव्ययम् ॥ १३९ ॥ हनुमानुवाच ॥ ध्यानास्पदमिदं ब्रह्म मत्पुरस्समुपस्थितम् । स्वामिन्दयानिधे राम ज्ञातोऽसि कपिना मया ॥ १४० ॥ त्वद्ध्याननिरता लोकाः किं न पश्यन्ति सादरम् । तवागमनहेतुश्च ज्ञातो ह्यद्य मयानघ

॥१४१॥ कर्तव्यं मम किं राम तथापि ब्रूहि राघव।
इति प्रचोदितो रामः प्रहृष्टात्मेदमब्रवीत् ॥१४२॥
राम उवाच ॥ दुर्जयः खलु वैदेहीं गृहीत्वा कोपि
निर्गतः। हत्वा तमघृणंवीरमानयत्वंकपीश्वर॥१४३॥
मम दास्यं कुरु सखे तव विश्वसुखं करम् । ओमि
त्याज्ञां तु शिरसा गृहीत्वा स कपीश्वरः ॥ १४४ ॥
विधेयं विधिवत्तत्र चकार शिरसा स्वयम् ।इदं नाम्नां
सहस्रं तु योऽधीते प्रत्यहं नरः ॥ १४५ ॥ दुःखौघो
नश्यते क्षिप्रं संपत्तिर्वर्द्धतेचिरम् । वश्याश्चतुर्विधास्त
स्य भवन्त्येव न संशयः॥ १४६॥राजानो राजपुत्राश्च

राजकीयाश्च मन्त्रिणः। त्रिकालं पठनादस्य सिद्धिः
स्यात्करसांस्थिता ॥ १४७ ॥ ब्राह्मे मुहूर्ते चोत्थाय
प्रत्यहं यः पठेन्नरः।ऐहिकामुष्मिकान् सोऽपि लभते
नात्र संशयः॥ १४८॥ संग्रामसंनिविष्टानां वैरिविद्रा
वणं परम्। ज्वरापस्मारशमनं गुल्मादिप्लीहवारण
म् ॥ १४९॥ साम्राज्यसुखसंपत्तिदायकं जपतां नृ
णाम्।य इदं पठते नित्यं पाठयेद्वासमाहितः।१५०॥
सर्वान्कामानवाप्नोति वायुपुत्रप्रसादतः ॥ १५१ ॥
इतिश्री ह० बृ० ध० उपासनास्त० श्रीहनुमदुपास
नाध्याये हनुमत्सहस्रनामस्तोत्रनिरूपणं नाम पंचमं

प्रकरणम् ॥ ५ ॥ श्लो० ३३० ॥ अथ हनुमत्स्तोत्रम् ॥ उक्तं च सुदर्शनसंहितायाम् । ॐ अस्य श्री हनुमत्स्तोत्रमन्त्रस्य विभीषणऋषिः शिरसि । अनुष्टुप्छन्दसे नमो मुखे । हनुमान्रुद्रो देवता हृदि । ह्रीं बीजं दक्षस्तने । स्वाहाशक्तिर्वामस्तने । हाहेतिकीलकं नाभौ । देवदत्तस्य मुखस्तम्भनार्थं जपे विनियोगाय नमः सर्वाङ्गे । ॐ ह्रां ह्रीं ह्रूं अङ्गु० ह० हनुमते तर्ज० शिर० । ॐ रुद्राय मध्य० शिखा० वषट् ॐ सर्वदुष्टजनं मुखस्तम्भनं कुरु २ अनामि० कव० हुं० ॐ सर्वकार्यसिद्धिं कुरु २ कनि० नेत्रत्र० वौषट् ॥ ॐ ह्रां ह्रीं ह्रूं फट्

स्वाहा करतलक० अस्त्रा० फट् ॥ अथ ध्यानम् ।
चन्द्राभं चरणारविन्दमधुरं कौपीनमौञ्जीधरं नाभ्यां
सत्कटिसूत्रयुक्तवसनं यज्ञोपवीतप्रभम् । हस्ताभ्या
मवलंब्यचाङ्गुलिपुटं हारावलिंकुण्डलं बिभ्रद्दीर्घशिरः
प्रसन्नवदनं तं चाञ्जनेयं भजे ॥ इति ध्यात्वा मानसो
पचारैरभ्यर्च्य ॐ ह्रांह्रींह्रूं हनुमते रुद्राय सर्वदुष्टमुख
स्तंभनं कुरु २ मम सर्व कार्यसिद्धिं कुरु २ ह्रांह्रींह्रूं
फट्स्वाहा इत्यष्टोत्तरशतं जप्त्वा स्तोत्रं पठेत् ॥
विभीषण उवाच ॥ आपन्नाखिललोकार्त्तिहारिणे श्री
हनूमते । अकस्मादागतोत्पातनाशनाय नमोऽस्तु

800
800

ते ॥ १ ॥ आधिव्याधिमहामारीग्रहपीडादिहारिणे ।
प्राणापहंत्रे दैत्यानां रामप्राणात्मने नमः ॥ २ ॥
संसारसागरावर्तगतोर्मिभ्रान्तचेतसाम् । शरणागत
मर्त्यानां शरण्याय नमोऽस्तु ते ॥ ३ ॥ राजद्वारे बिल
द्वारे प्रवेशे भूतसङ्कुले । गजसिंहमहाव्याघ्रचोरभी
षणकानने ॥ ४ ॥ शरण्यातिशरण्यायानिलात्मज
नमोऽस्तु ते । प्रदोषे च प्रवासे च ये स्मरंत्यञ्जनीसु
तम् ॥ ५ ॥ अर्थसिद्धियशःकान्तीः प्राप्नुवंति न सं
शयः । कारागृहे प्रयाणे च संग्रामे देशविप्लवे ॥ ६ ॥
ये स्मरंति हनूमन्तं तेषां नास्ति विपच्चयः । वज्रदेहाय

कालाग्निरुद्रायामिततेजसे ॥ ७ ॥ दुष्टदैत्यमहादर्प दलनाय महात्मने । ब्रह्मास्त्रस्तंभिने तुभ्यं नमः श्रीरुद्रमूर्तये ॥ ८ ॥ सीतावियुक्तश्रीरामशोकदुःख भयापह । तापत्रयोपसंहारिन्नाञ्जनेय नमोऽस्तु ते ॥ ९ ॥ जप्त्वा स्तोत्रमिदं मंत्रं वसुवारं जपेन्नरः । राजद्वारे सभास्थाने प्राप्ते वादे जयो भवेत् ॥ १० ॥ विभीषणकृतं स्तोत्रं यः पठेत्सततं नरः । सर्वापद्भ्यो विमुच्येत नात्र कार्या विचारणा ॥ ११ ॥ सर्वसिद्धि मवाप्नोति सर्वत्रविजयी भवेत् । यः पठेत्परया भक्त्या सगच्छेद्वैष्णवंपदम् ॥ १२ ॥ लिखित्वा पूजयेद्यस्तु स

पुमाञ्जयमाप्नुयात् ॥ १३ ॥ ॐ नमो हनुमते रुद्राय सर्वदुष्टजनमुखस्तंभनं कुरु २ उद्दण्डदोर्दण्डवृन्दसैन्येन्द्रवीरप्रतापप्रकटपरिक्रमकृपालुरामदूताञ्जनेयहारिमर्कटमर्कटआपदोद्धार श्रीवीरहनुमन् मम शत्रून्संहारय संहारयाद्य मां रक्षरक्ष ॥ १४ ॥ इति श्रीह० बृ० ध० उपा० स्त० श्रीहनुमदुपासनाध्याये सुदर्शनसंहितोक्तं श्रीहनुमत्स्तोत्रनिरूपणं नाम षष्ठं प्रकरणम् ॥ ६ ॥ श्लो ३४४ ॥ अथ विचित्रवीरहनुमन्मालामंत्रः ॐ अस्य श्रीविचित्रवीरहनुमन्मालामन्त्रस्य श्रीरामचन्द्रो भगवानृषिः अनुष्टुप्छंदः श्रीविचि

ॠवीरहनुमान् देवता ममाभीष्टसिद्ध्यर्थे मालामंत्र जपे विनियोगः॥ अथ न्यासः॥ ॐ ह्रां अंगु० हृद० ॥ ह्रीं तर्ज० शि० ॥ ॐ ह्रूं म० वषट् ॥ ॐ ह्रैं० अं० हुं ॥ ॐ ह्रौं कनि० नेत्र० ॥ ॐ ह्रः करत० फट् ॥ अथ ध्यानम् ॥ वामे करे वैरवहं वहन्तं शैलं परे शृंखलमालयाढ्यम् । दधानमाध्मातसुवर्णवर्णं भजे ज्वलत्कुण्डलमाञ्जनेयम् ॥ १ ॥ ॐ नमो भगवते विचित्रवीरहनुमते प्रलयकालानलप्रभाज्वलत्प्रतापवज्रदेहाय अंजनीगर्भसंभूताय प्रकटविक्रमवीरदैत्यदानवयक्षराक्षसग्रहबंधनाय भूतग्रहप्रेतग्रहपिशाचग्रहशाकि

नीग्रहडाकिनीग्रहकाकिनीग्रहकामिनीग्रहब्रह्मग्रह
ब्रह्मराक्षसग्रहचोरग्रहबंधनाय एहिएहि आगच्छा
गच्छ आवेशयावेशय ममहृदयं प्रवेशय २ स्फुर२
प्रस्फुर सत्यं कथय २ व्याघ्रमुखं बंधय २ सर्पमुखं
बंधय २ राजमुखं बंधय २ सभामुखं बंधय २ शत्रु
मुखं बंधय २सर्वमुखं बंधय २लंकाप्रासादभंजनसर्व
जनं मे वशमानय२श्रीं ह्रीं क्लीं श्रीं सर्वानाकर्षय २
शत्रून्मर्दय २ मारय २ चूर्णय २ खेखेखे श्रीराम
चन्द्राज्ञया प्रज्ञयाममकार्यसिद्धिंकुरुकुरुममशत्रून्भ
स्मींकुरुकुरुस्वाहा ॥ ॐह्रांह्रींह्रूंह्रैंह्रौंह्रः फट् श्रीविचि

त्रवीरहनुमते मम सर्वशत्रून भस्मीकुरु कुरु हनहन हुं फट्स्वाहा ॥ प्रतिदिनमेकादशवारं जपेत् । पूर्वव-न्न्यासध्यानपूर्वकं निवेदयेत् ॥ इति श्रीह॰बृ॰ध॰ उपा॰ स्त॰ श्रीहनुमदुपासनाध्याये श्रीविचित्रवीर हनुमन्मालामंत्रनिरू॰नामसप्तम प्रकर॰॥७॥श्लो॰ ॥ ३४६ ॥ अथ श्रीसौभाग्यहनुमन्महामंत्रः ॥ ॐ अस्य सौभाग्यहनुमन्महामंत्रस्य श्रीरामचन्द्रऋषिः ॥ अतिजगतीछंदः । श्रीहनुमान्परमात्मा रुद्रो देवता।हनुमानिति बीजम् ॥वायुर्देवता इतिशक्तिः ॥ अञ्जनीसुत इति कीलकम् ॥ श्रीहनुमत्प्रसादसिध्य

र्थे जपे विनियोगः। ॐ हं हनुमान् अंगुष्ठाभ्यां० ॥ ॐ वं वायुदेवतायै तर्जनीभ्यां० । ॐ अं अञ्जनीसुताय मध्यमाभ्यां० ॐ रं रामदूताय अनामिकाभ्यां० । ॐ हं हनुमते कनिष्ठिकाभ्यां० । ॐ रुं रुद्रमूर्त्तये करतल करपृ० । एवं हृदयादिन्यासः ॥ अथ ध्यानम्—

अथातः संप्रवक्ष्यामि शृणु सर्वाङ्गसुन्दरि। अथैवं देवदेवेश ध्यानं श्रीहनुमत्परम् ॥ १ ॥ पञ्चवक्त्रं महाभीमं त्रिपञ्चनयनैर्युतम् । बाहुभिर्दशभिः प्रोक्तं सर्वकामार्थसिद्धिदम् ॥ २ ॥ पूर्वं च वानरं प्रोक्तं कोटिसूर्यसमप्रभम् । दंष्ट्राकरालवदनं भ्रुकुटीकुटि

श्वरम् अस्यैव

लेक्षणम् ॥ ३ ॥ तथैव दक्षिणे वक्त्रं नारसिंहं महाद्भुतम् । अत्युग्रतेजसं वर्यं भीषणं भयनाशनम् ॥ ४ ॥ पश्चिमे गरुडं वक्त्रं वज्रतुण्डं महाबलम् । पवनाद्रिप्रशमनं सर्वभूतनिकृन्तनम् ॥ ५ ॥ उत्तरे सूकरं वक्त्रं कृष्णं दीप्तं नभोनिभम् । पातालनिधिभेत्तारं ज्वररोगनिकृन्तनम् ॥ ६ ॥ कुर्वन्तसंतोषणं तेषां सर्वशत्रुहरं परम् ॥ इति ध्यात्वा पञ्चोपचारैः पूजां कुर्यात् । अथ सप्तमुद्राः प्रदर्शयेत्–खड्गं त्रिशूलं खट्वाङ्गं पाशं चाङ्कुशमेव च । चक्रमुद्गरमुद्रा च सप्त मुद्राः प्रकी



१ कुर्वि...

तिंताः ॥ ७ ॥ अथ मालामंत्रः । ॐ रामदूताय अंजनीवायुसुताय महाबलाय सीताशोकदुःखनिवारणाय लङ्कोपदहनाय बाहुलप्रचंडाय फाल्गुनसखाय कोलाहलब्रह्मांडविश्वरूपाय सप्तसमुद्रनीरलंघनाय पिङ्गलनयनायामितविक्रमाय सूर्यबिंबफलसेविताय दृष्टिनिरालंकृताय संजीवसंजीवितलक्ष्मणाङ्गदसुग्रीवमहाकपिसैन्यप्राणनिर्वाहकाय दशकण्ठविध्वंसनकारणसेविताय श्रीसीतासमेतश्रीरामचन्द्रमूर्त्तये स्वाहा ॥ अथ मूल मंत्रः ॥ ॐ हनुमन् वायुदेवताय अंजनीसुतरामदूत हनुमन् रुद्रमूर्त्तये

स्वाहा ॥ इति यथाशक्ति यथाज्ञानं यथासंख्यं मूलमंत्रजपं कुर्यात् । मूलमंत्रजपकाले मालामंत्रजपस्याद्यन्तयोः त्रिरावृत्तिः । एतन्नामसंपुटीकरणसूचनम् । अथ पूर्वोक्तमुद्राः प्रदर्शयेत् । तथा पूर्वोक्तं ध्यानं कराङ्गन्यासांश्च कुर्यात् । गन्धादिनमस्कारान्त पूजनं चेति॥इति श्रीह० बृ० ध० उपा० स्त० श्रीहनुमदुपा० ध्यायेश्रीसौभाग्यहनुमन्महामंत्रनिरूपणंनामाष्टमप्रकरणम् ॥८॥श्लो०॥३८३॥

अथ श्रीहनुमद्दीपदानविधिः । उक्तं च सुदर्शनसंहितायाम् अथातः संप्रवक्ष्यामि दीपदानं हनूमतः ।

येनविज्ञानमात्रेण सिद्धो भवति साधकः ॥१॥ दीप
दानप्रमाणं तु सावधानादिदं शृणु । प्रमाणंतंतुवक्ष्या
मिपञ्चमानमनुक्रमात् ॥२॥ स्थानं भेदं च मंत्रं च दी
पदाने मनुं पृथक् । पुष्पवासिततैलं च सर्वकामफल
प्रदम् ॥३॥ तिलतैलं श्रियोहेतुः पथिकागमनाय च।
अतसीतैलमुद्दिष्टं यशःकर्मणि निश्चितम् ॥ ४ ॥
सार्षपं रोगनाशाय सर्वव्याधिविनाशकम् । मारणे
राजिकाजातं तथा वैभीतकादिकाम् ॥५॥ उच्चाटे
च करञ्जोत्थं विद्वेषे मधुवृक्षजम् । अलाभे सर्वतैलं च
तिलतैलमनुत्तमम् ॥ ६ ॥ गोधूम च तिलं माषं मुद्गं

वै तन्दुलं क्रमात् । पंचधान्यमिदं प्रोक्तं नित्यं दीप उदाहृतम् ॥ ७ ॥ पंचधान्यसमुद्भूतं पिष्टपात्रं सुशोभनम् । सर्वकाममिदं प्रोक्तं सर्वदा दीपदापने ॥ ८ ॥ वश्ये तंडुलपिष्टं च मारणे माषपिष्टकम् । उच्चाटने तिलं कृष्णं यवपिष्टं प्रकीर्तितम् ॥ ९ ॥ पांथस्यागमने प्रोक्तं गोधूमोत्थं सतंडुलम् । मोहने तण्डुल पिष्टमाकर्षे मुद्गपिष्टकम् ॥ १० ॥ संग्रामे केवलं माषं कृत्वा दीपं च पात्रके । संधौ त्रिपलजं प्रोक्तं लक्ष्मीः कस्तूरिका मता ॥ ११ ॥ एलालवङ्गकर्पूरमृगनाभिसुसंयुता । कन्यकावरणे राजवश्ये सर्वं तथैव च ॥ १२ ॥ अलाभे

सर्ववस्तूनां पञ्चधान्यं परं मतम् । अष्टमुष्टिभवे त्किञ्चित्किञ्चित्पिष्टं तु पुष्कलम् ॥ १३ ॥ पञ्चसप्ततथा रौद्रं प्रमाणं च यथाक्रमम् । सुगन्धं नैव मानं स्याद्य थारुचि सम्मतम् ॥ १४ ॥ नित्यं दीपः प्रकर्त्तव्यस्ता म्रपात्रे हनूमतः । सोमवारे तथा ध्यात्वा जलप्लावं च का रयेत् ॥ १५ ॥ पश्चात्प्रमाणतो ग्राह्यं क्रमशो हस्तमा नकम् । तत्पिष्टं शुद्धपात्रे तु नदीतोयेन शोधितान् ॥ १६ ॥ दीपपात्रं ततः कुर्याच्छुद्धो नियतमानसः । दीपे पात्रे योज्यमाने मारुतेः कवचं पठेत् ॥ १७ ॥ इति पात्रविधिः ॥ मालानूनाश्च ये वर्णाः साध्यनामसम

न्विताः । वार्त्तिकायाः प्रकर्तव्यं तन्तवस्तत्प्रमाणतः ॥१८॥ त्रिंशांशेनैव सारम्या गुरुकार्येऽखिले मता । कूटतुल्या स्मृतानित्या सामान्याथ विशेषतः ॥१९॥ रुद्रकूटगुणाप्रोक्ता न पात्रं च विचालयेत्। एकविंशति संख्याकास्तन्तवो निर्मला मताः ॥२०॥ रक्तसूत्रं हनुमतो दीपदाने प्रकीर्तितम् । कृष्णमुच्चाटने प्रोक्तं द्वेषमारणकर्मणि ॥ २१ ॥ कटुतुल्यपलं तैलं गुरुकार्येऽष्टसंगुणम् । नित्ये पंचपलं प्रोक्तमथवा मनसो रुचिः ॥२२॥ हनुमत्प्रातिमायास्तु सन्निधौ दीपदापनम् । प्रतिमादीपसहिताग्रहभूतग्रहेषु च ॥ २३ ॥

चतुष्पथे तथा प्रोक्तं दीपदानमनन्तरम् । सन्निधौ स्फा
टिके लिङ्गे शालग्रामस्य सन्निधौ ॥ २४ ॥ नानाभो
गाश्रयं प्रोक्तं दीपदानं हनूमतः । गणेशसान्निधौ वि
ष्णोर्महासंकटनाशनम् ॥ २५ ॥ विषव्याधिमहा
घोरे हनुमत्सान्निधौ कुरु । दुर्गायाःसान्निधौ प्रोक्तं संग्रा
मे घोरसंकटे ॥२६॥ द्यूते वृष्टिस्थले चैव विशेषान्मा
रणे तथा । व्याधिनाशे तुण्डबन्धे दुष्टदृष्टौ तथैव च२७
राजद्वारे बंधमुक्तौ गुरुकार्ये प्रयत्नतः । गजस्य मस्त
केचैव राज्वलक्ष्मीसमृद्धये ॥ २८ ॥ स्त्रीवशीकरणे
दीपो वापीतीरे सरोवरे । विप्रक्षत्रियविट्शूद्रवश्ये

विप्रालये शुभम् ॥२९॥ जपे पूर्वमुखः कार्य उच्चाटे वायवस्स्मृतः । सर्ववश्ये च कर्त्तव्यो दीपो याम्यादिशामुखः ॥३०॥ मारणे भेदकार्ये च कर्त्तव्यो राक्षसीमुखः। शान्तिके पौष्टिके सन्धौ कन्यापुत्रामये तथा ३१ अभिचारार्थसिध्यर्थं दीपः कार्यो जलाश्रितः। स्तंभने भूतदमने शाकिनीनां च विग्रहे ॥ ३२ ॥ व्यंतराणां च यक्षाणां पवनाभिमुखं कुरु । धानेशो धनधान्यादि राज्यलक्ष्मीसमृद्धये ॥ ३३ ॥ दीपः कार्यो महायोगे पान्थस्यागमनाय च । ईशानाभिमुखः कार्यो सर्वऋद्धिवृद्धये ॥३४॥ सर्वेषु गुरुकार्येषु राजपत्नीवशे

तथा । वृष्टः समागमार्थाय देशस्योत्सादनाय च
॥३५॥दवेतासम्मुखः कार्यो दीपः शून्ये प्रकल्पयेत्
वृत्तिष्टवृक्षादिानष्पौ दुर्गे तोयप्रशोषणे ॥ ३६ ॥
विवरादिप्रवेशेषु भूमिस्थधनकर्षणे । गण्डभेदेषु सर्वेषु
शृङ्खलाबन्धमोचने ॥ ३७ ॥ खातं कृत्वा करोन्मानं
चतुरस्रं सुशोभनम् ।तन्मध्ये स्थापयेद्दीपं दक्षिणाभि
मुखंतथा ॥ ३८ ॥ पात्रधारणयंत्रं तु विशेषणनिशा
मय । स्वर्णरूपोद्भवं ताम्रं त्रपुलोहोद्भवं तथा ॥३९॥
नागपात्रं विशेषेणवश्यादिषु च कर्मसु । पात्राधारे तु
षट्कोणे तथा बीजानि विन्यसेत् ॥ ४० ॥ ह्रौंह्रौंह्रौं

ह्रांफेंह्रौंक्रमात् ॥ अग्निकोणं समाश्रित्य कोणे कोणे यथाक्रमम् । मध्ये हनूमद्गायत्रीं तांशृणुष्वषडानन ॥४१॥ रामदूतायविद्महेवायुपुत्रायधीमाहि तन्नोहनुमानप्रचोदयात् ॥ततो मंत्रेण दीपपात्रंवेष्टयेत् ॥ ॐ ह्रांह्रींहूंह्रैंह्रौंवज्रतुंडकाय लंकेश्वरवधाय महासेतुबंधाय महाशैलप्रवाहगगनेचर एह्येहिभगवन् महाबलपराक्रमभैरवायाज्ञापय एह्येहि महारौद्रदीर्घपुच्छेन वेष्टय वैरिणो भंजय२ हुँफट् इतिमंत्रं समुच्चार्य ब्रह्मचर्यंजपं जपेत्। पंचाशदधिकं पात्रेयंत्रं मंत्रेण वेष्टयेत्। छुरिका अग्रतः स्थाप्या करवीरैश्च पूजयेत्॥४२॥

अथ मंत्र प्रवक्ष्या मिमंत्रेण च प्रपूजयेत् । ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः फ्रें हनुमन् प्रकटपराक्रम आक्रांतदिङ्मण्डलयशोधवलीकृतजगात्रितयवज्रदेह ज्वलत्सूर्यकोटिसमप्रभ । तनुरुद्रावतारलंकापुरदहन उदधिलंघनदशग्रीवशिरःकृतान्त सीतायासानिवारक वायुसुत अञ्जनिगर्भसंभूत श्रीरामलक्ष्मणानन्दकरकपिसैन्यप्राकारसुग्रीवसख्यकारणबालिनिबर्हण द्रोणपर्वतोत्पाटन । अशोकवनविदारण अक्षकास्यच्छेदन वनरक्षाकारसमूहभंजन ब्रह्मास्त्रब्रह्मशक्तिग्रसन लक्ष्मणशक्तिभेदन लक्ष्मणशक्तिभेदनानिवारण।

शिशुसमानपीनबालादित्यसानुग्रसनमेघनादहोम विध्वंसन । इंद्रजिद्वधकारण सीतारक्षकराक्षसविदारण । कुंभकर्णादिवधपरायण । श्रीरामभक्तितत्पर व्योमद्रुमोल्लंघनमहासामर्थ्यंमहातेजः पुञ्जविराजमानस्वामिवचनसंपादितअर्जुनसंयुगसहाय । कुमारब्रह्मचारी गभीरस्वर दाक्षिणांशमार्तंडमेरुपर्वतोत्पाटकचरण। सर्वदुष्टनिबर्हणव्याघ्रादिभयनिवारणसर्वशत्रुच्छेदनसमपरस्य त्रिभुवनस्त्रीपुंनपुंसकात्मकं सर्वजीवजातं वशय २। ममाज्ञाकारं संपादय संपादय नाना नामधेयान् राज्ञः सपरिवारान् मम सेवकान्

कुरु २। सर्ववश्यअविषाणाविध्वंसयर प्रबलानि परसै न्यानिक्षोभयर सर्वकार्यादिनादितिसाधय २ सर्वदुर्ज नानां मुखानिस्तंभयकीलयघेघेघेहाहाहा हुंहुंहुंफट् स्वाहा । मंत्रमेतत्पठेन्नित्यं यावद्दीपं समापयेत् । दीपाग्रे पठमानस्तु मनोवांछितमाप्नुयात् ॥ ४३ ॥ अथ विधिः ॥ भूमिशायी नक्तभोजी वर्णमालासम न्वितः ॥ कपीश्वरं स्मरेन्नित्यमेकाविंशतिवासरान् ॥ ४४ ॥ प्रमाणं दीपकरणे कार्यसिद्धिः प्रजायते । शकुनान्संप्रवक्ष्यामि आगमोक्तप्रमाणकान् ॥४५॥ कार्पासं रसकुंभं च विद्धाङ्गं चाङ्गवर्जितम् । अधि

काङ्गं दुष्टबुद्धिं दृष्ट्वा कार्यं न जायते ॥ ४६ ॥ सुवासिनीं सुपुरुषं फलं गां वत्ससंयुताम् । तुरङ्गं गजखड्गं च दृष्ट्वा बाह्यं सुखप्रदम् ॥ ४७ ॥ एवं दीपविधानं च मयोक्तं ते विशेषतः । हिताय जगतां पुत्र तत्क्षणात्सिद्धिकारकम् ॥ ४८ ॥ तस्मात्सर्वं प्रयत्नेन देयं कृत्वा परीक्षणम् । देवानां च यथा विष्णुर्नदीनां जाह्नवी तथा ॥ ४९ ॥ तक्षकः सर्वनागानां धेनूनां कामधुक्तथा । तथा सुदर्शनं चेयं संहिता परिकीर्तिता ॥ ५० ॥ विष्णुभक्ताय शान्ताय कान्ताय वशवर्तिने । सुभक्ताय सुशिष्याय नतनाय प्रकाश

येत् ॥ ५१ ॥ यथा माहिष्मतीनाथस्तथा वायुसुतः स्मृतः । उभयोरन्तरं नास्ति कृत्वा पापमवाप्नुयात् ॥ ५२ ॥ इतिश्रीह० बृ० ध० उपा० स्त० श्रीहनुमदु पा० ध्याये सुदर्शनसंहितोक्तश्रीहनुमद्दीपदानविधि निरूपणं नामनवमं प्रकरणम् ॥ ९ ॥ श्लो० ॥४०७॥

अथ हनुमत्पताकाव्रतम् ॥ उक्तं चानन्दरामायणे मनोहरकाण्डे॥ विष्णुदास उवाच॥ किञ्चिद्व्रतं हनुमतस्त्वं मां वक्तुमिहार्हसि ॥ रामदास उवाच ॥ यदारामस्त्रिकूटाद्रौ नागपाशैस्तु पीडितः । नारदस्य वचः श्रुत्वा सस्मार विनतासुतम्॥ १ ॥ तदासौ काश्यपि

वीरः समागत्य रणाङ्गणे । प्रणाममकरोत्तस्मै रामा यामिततेजसे ॥ २ ॥ निवार्यपन्नगास्त्रं तन्मेघनाद समीरितम्। तुष्टाव रघुवीरं तं ससैन्यं च सलक्ष्मणम् ॥ ३ ॥ उवाच प्रणिपत्याथ रामभद्रं खगेश्वरः ॥ गरुड उवाच॥ आश्चर्यमिदमत्यंतं यद्भवानस्मरद्धि माम् ॥ ४ ॥ सति वीरे महारुद्रे सगणे श्रीहनूमति। सुग्रीवे च नले नीले सुषेणे जाम्बवत्यपि॥ ५ ॥ अंगदे दधिवक्त्रे च तारे च तरले तथा। मैन्दे सति महावीर्ये किमत्रास्ति प्रयोजनम् ॥ ६ ॥ श्रीराम उवाच ॥ भवद्भीतिमुपागम्य विद्रुताश्च भुजंगमाः। एतेषु स

त्सुवीरेषु किमु सैन्यमपीडयन् ॥ ७॥ गरुड उवाच ॥ रामदेव महाबाहो कपीनां चरितं शृणु । आत्मनो पि समाविष्टान्मा कुरुष्वात्र गर्हणम् ॥ ८ ॥ साक्षात्त्व भगवान्विष्णुर्लक्ष्मीस्तु जनकात्मजा । सौमित्रिः फणिराजोऽयं रुद्राश्च कपयः स्मृताः ॥ ९ ॥ सुग्री वो वीरभद्रोयं १ शंभुरेषः स्मृतोऽनलः २ । विद्धि दा शरथे नून गिरीशो नील एव च ३ ॥ १० ॥ महायशाः सुषेणोऽय ४ जांबवांश्चाप्यजैकपात् ५ । अहिर्बुध्न्य स्त्वंगदोऽत्र ६ दधिवक्रः पिनाकधृक् ७ ॥ ११ ॥ आयुताजित्त्वयं तारः ८ स्थाणुश्च तरलोमतः ९ । मैन्दौ

भर्गतनुः साक्षात् १० हनुमान्भगवान्स्मृतः ११ ॥ १२॥ अवतीर्णा महारुद्रास्त्वदर्थं रघुनन्दन । अवसन्सर्वदेशेषु नानापर्वतमध्यतः ॥ १३ ॥ धृत्वा च कपिरूपाणि अवतेरुर्महीतले । सर्वेऽपि कपितां प्राप्ताः कारणं तद्ब्रवीमि ते ॥ १४ ॥ पुरा देवासुरैः सिन्धोर्मथिताद्व्याधयोऽभवन् । नानापीडाकराः सर्वा लूताविस्फोटकादयः ॥ १५॥ तैरेव व्याधिभिः सर्वं पीडितं जगतीतलम् । ऋषयोऽपि नृपालाश्च ब्रह्माणं शरणं ययुः ॥ १६ ॥ ऊचुश्च जगतां नाथं ब्रह्माणं कमलोद्भवम् । त्राहि त्राहि जगन्नाथ व्याधिभ्यो जगतीमिमाम्

॥ १७ ॥ पीडितां दारुणैर्दोषैर्ज्वराद्यैश्च महोल्बणैः ।
त्रिदोषैर्जर्जरीभूतां विभ्रमैर्व्याकुलीकृताम् ॥ १८ ॥
औषधानि न सिध्यंति मंत्रयंत्राणि चैव हि।पीडयंति
महारोगा मानवान्नाशकारिणः॥ १९॥ एतत्ते कथितं
सर्वं ब्रह्मंस्त्वत्पुरतः सुधीः ॥ २० ॥ तत्तेषां वचनं
श्रुत्वारुद्रान्संप्रार्थयद्विधिः।तेऽपि श्रुत्वा ब्राह्मवाक्यं
रुद्रा एकादशामलाः ॥ २१ ॥ समाश्वासं विरंचिं ते
वीरभद्रादयः सुराः । संभूयवानरेष्वेव सुग्रीवप्रमुखा
इमे ॥ २२॥ पर्यटन्पर्वताग्राणि मंडलानिचसर्वशः ।
नादयन्तो जगत्सर्वं भुभुःकारैःसुदारुणैः ॥ २३ ॥ क्ष्वे

डितैः क्रीडनैस्तेषां व्याधयो नाशमाप्नुयुः । ततस्तुस
कलां दृष्ट्वा वानरैर्वेष्टितां भुवम् ॥ २४ ॥ तुतोष भगवान्
ब्रह्मा ददौ तेभ्यो वरान्बहून् । ब्रह्मोवाच ॥ युष्मा
स्वपि च मुद्रास्तु मृतसंजीवनी कला ॥ २५ ॥ आ
ज्ञाऽस्तु सर्वजगति वेगोऽस्तु मनसः समः । युष्मान्
स्मरंति ये मर्त्याःपूजयंति भवत्तनूः ॥ २६ ॥ पताका
विविधाः कृत्वा चित्रतोरणसंयुताः । भक्ष्यभोज्यानि
खाद्यानि लेह्यं पेयं च सर्वशः ॥ २७ ॥ युष्मानु
द्दिश्य ये मर्त्या जुह्वंति हि हुताशने । हविः पुण्यतमं
रुद्रास्तेषां सिद्धिर्न संशयः ॥ २८ ॥ पायसेनैवसाज्येन

तथैव तिलसार्पिषा । यजंति भवतां वृन्दं ते यांति परमं पदम् ॥२९॥ एवं वैरुद्रमाखिलं गाथावैश्वानरी स्तथा । मानस्तोकेतिवा मंत्रो मनोज्योतिरथापि वा ॥३०॥ भवतां यजनं चात्र गायत्र्या वा प्रकीर्त्तितम्। एवं ये मानवा लोके विधानंपरिकुर्वते॥३१॥ व्याधिं मुक्त्वा सुखासीनास्त्वन्तेयांत्यक्षयं पदम् ॥ ३२ ॥ गरुड उवाच॥इति राम पुरावृत्तंकपीनां कथितं मया। एषु रुद्रेषु सर्वेषु हनुमान्भद्रनायकः ॥ ३३ ॥ विधानं तत्र कर्त्तव्यं यत्रास्ति हनुमत्तनुः । गोपुरे हनुमन्मूर्तिः शिलायां च प्रतिष्ठिता ॥ ३४ ॥ तत्र सर्वं प्रकर्त्तव्यं

विधानं सुरसत्तम ॥ श्रीराम उवाच॥ येन केन प्रकारेण क्रियते कपिपूजनम्॥ ३५॥ पताकाः कीदृशस्तत्र कति कार्या विहंगम । हवनं कतिसंख्याकं किंद्रव्यं को जपोऽत्र वै ॥ ३६ ॥ किंदानं केन विधिना तन्ममाचक्ष्व सुव्रत ॥ गरुडउवाच ॥ जनमारे समुत्पन्नेग्रामेवापत्तनेपि वा ॥ ३७ ॥ प्रभवत्यौषधं नैव मणिमंत्रपुरःक्रिया । विधानं तत्र कर्त्तव्यमेकादश्यां तिथौ नृप ॥ ३८ ॥ प्रातःकाले समुत्थायकृतशौचो द्विजोत्तमः । स्नात्वा गङ्गाजले पुण्ये तिलामलकसंस्कृतः॥३९॥एकादशद्विजान् श्रेष्ठान्सोपवासान्निमंत्रये

त्। जागरस्तैस्तु कर्त्तव्यः सर्वोपस्करसंयुतः ॥४०॥
आदौ तु मंडपं कृत्वा सर्वत्रापि सुशोभितम्। पुष्पमं
डपिकामध्येमंडपेस्थापयेद्धरान् ॥ ४१ ॥ पञ्चामृतै
स्तु स्नपनं रुद्रेभ्यः परिकल्पयेत्। ततस्तु कुसुमैः
पूजा शतपत्रादिभिः शुभैः॥४२॥ चन्दनं च सकर्पूरं
देयं रुद्रांस्तु लेपनम्। दशाङ्गधूपमादद्याद्दीपैर्नीराज
येत्ततः ॥ ४३ ॥ नैवेद्यं विविधं दद्यात्तांबूलेनैव संयु
तम्। एकादशपताकास्तुपटैःसुपरिकल्पयेत् ॥४४॥
या या यस्मै समुद्दिष्टा पताका च शुशोभना। तस्य
तस्यैव रूपं तु तस्यामेव प्रलेपयेत् ॥ ४५ ॥ एवं

कृते विधाने च सुपताकासुतोरणैः । प्रातःकाले तु राजेन्द्र जागरांते द्विजोत्तम ॥४६॥ कृतस्नानो नदीतोये होमं कुर्यात्समाहितः । पायसेनतुसाज्येनतथैव तिलसार्पिषा ॥ ४७ ॥ अयुतं हवनं कृत्वा पुनः पूजां प्रकल्पयेत् । पताकां हनुमद्द्वारे तस्यैव च निधापये त् ॥ ४८॥ राजद्वारे तु सौग्रीवीं सौषेणीमापणे न्यसेत् । नलनीलपताके तु शिवद्वारे तु विन्यसेत् ॥ ४९॥ मरस्य तरलस्यापि मैन्दस्य ह्यङ्गदस्य च । ग्रामाद्बहिश्चतुर्दिक्षु मार्गेषु स्थापयेद्धिया ॥ ५० ॥ जल



स्थानजांबवतो दाधिवक्त्रीं चतुष्पथे । स्थापयेत्परमां

दिव्यांमहावाद्यादिमङ्गलैः ॥ ५१ ॥ द्वारदेशे जना
नां च रुद्रमूर्त्तिं विलेखयेत् । चित्रितां पंचवर्णैश्च
ग्रामसूत्रैश्चवेष्टयेत् ॥ ५२ ॥ प्रत्यहं कारयेद्विद्वान्
भक्त्या च ब्राह्मणार्पणम् । दद्याद्वस्त्राणि ऋत्विग्भ्यो
सालङ्काराणि भूपतिः ॥ ५३ ॥ छत्राणि करपत्रैश्च
पादुकाश्च विशेषतः । धेनुं पयस्विनीं दद्यादाचार्याय
सवत्सकाम् ॥५४ ॥ सदक्षिणांसवस्त्रां च सालंकारां
गुणान्विताम् । द्विजाय महिषीं दद्यात्तथैव पृथिवी
पते ॥ ५५ ॥ अन्येभ्यो ब्राह्मणेभ्यश्च सप्तधान्यानि
भारिशः । लवणं सघृतं देयं तैलं च सगुडं तथा॥५६॥

शय्यादानानि भूरीणिच्छत्राणिविविधानिच । एतत् कृत्वा विधानं च राजा क्षेममवाप्नुयात् ॥ ५७ ॥ रुद्रएवात्रानिर्दिष्टो जपेत् सर्वैःसुलक्षणः। अथवा हवनं शस्तं मानस्तोक इति स्फुटम् ॥ ५८॥ इतिश्रीह॰ बृ॰ ध॰ उपा॰ स्त॰ श्रीहनुमदुपास॰ ध्यायेआनंदरामायणोक्तहनुमत्पताकाव्रतविधाननिरूपणंनाम दशमंप्रकरणम् ॥ १० ॥ अथहनुमत्कल्पम् । उक्तं च तन्त्रसारे । देव्युवाच ॥ शैवादिगाणपत्यादिशाक्तानि वैष्णवानि च ।साधकानि च सौराणि चान्यानि यानि कानि च ॥ १ ॥ एतानि देवदेवेश त्वदुक्तानि

श्रुतानि च । किंचिदन्यच्च देवानां साधनं यदि कथ्यताम् ॥ २ ॥ शङ्कर उवाच ॥ शृणु देवि प्रवक्ष्यामि सावधानाऽवधारय । हनुमत्साधनं पुण्यं महापातकनाशनम् ॥ ३ ॥ एतद्गुह्यतमं लोके शीघ्रसिद्धिकरं परम् । जयो यस्य प्रसादेन लोकत्रयजितो भवेत् ॥४॥ तत्साधनविधिं वक्ष्ये नृणां सिद्धिकरं यतः । हुंकारमादौ संप्रोक्तं हनुमते तदनन्तरम् । रुद्रात्मकाय हुंचैव फडिति द्वादशाक्षरम् ॥ ५ ॥ ( हुं हनुमते रुद्रात्मकाय हुंफट् १ ) एतन्मन्त्रं समाख्यातं गोपनीयं प्रयत्नतः । तव स्नेहेन भक्त्या

च ददामि तव सुन्दरि ॥ ६ ॥ एतन्मंत्रमर्जुनाय पुरा दत्तं तु शौरिणा । जपेन साधनं कृत्वा जितं सर्वं चराचरम् ॥ ७ ॥ नदीकूले विष्णुगेहे निर्जने पर्वते वने । एकाग्रचित्तमाधाय साधयेत्साधनं महत् ॥ ८ ॥ महाशैलं समुत्पाटय धावन्तं रावणं प्रति । तिष्ठतिष्ठ रणे दुष्ट मम जीवन्न मोक्ष्यसे ॥ ९ ॥ इति ब्रुवन्तं कोपेन क्रोधरक्तमुखाम्बुजम् । भोगीन्द्राभं स्वलांगूलमुत्क्षिपन्तं मुहुर्मुहुः ॥ १० ॥ लाक्षारक्तारुण रौद्रं कालांतकयमोपमम् । ज्वलदग्निसम नेत्रं सूर्यकोटि समप्रभम् ॥ ११ ॥ अंगदाद्यैर्महावीरैर्वेष्टितं रुद्ररू

पिणम् । एवंरूपं हनूमन्तं ध्यात्वा यः प्रजपेन्मनुम्
॥ १२ ॥ लक्षजापात्प्रसन्नः स्यात्सत्यं ते कथितं
मया । ध्यानैकमाश्रितानां च सिद्धिरेव न संशयः
॥ १३ ॥ प्रातः स्नात्वा नदीतीरे उपविश्य कुशा
सने । प्राणायामं षडङ्गं च मूलेन सकलं चरेत्
॥ १४ ॥ पुष्पाञ्जल्यष्टकं दत्त्वा ध्यात्वा रामं ससीत
कम् । ताम्रपात्रे ततः पद्ममष्टपत्रं सकेसरम् ॥ १५ ॥
रक्तचन्दनघृष्टेन लिखेत्तस्य शलाकया। कर्णिकायां
लिखेन्मन्त्रं तत्रावाह्य कपिं प्रभुम् ॥ १६ ॥ कर्णिका
यां यजेद्देवं दत्त्वा पाद्यादिकं ततः । गन्धपुष्पादिकं

चैव निवेद्य मूलमन्त्रतः ॥१७॥ सुग्रीवं लक्ष्मणं चैव अङ्गदं नलनीलकम्। जांबवन्तं च कुमुदं केसरिणं दलेदले ॥ १८ ॥ पूर्वादिक्रमतो देवि पूजयेद्गन्धचन्दनैः। पवनं चाञ्जनीं चैव पूजयेद्दक्षवामतः ॥१९॥ दलाग्रेषु क्रमात्पूज्या लोकपालास्ततः परम्। ध्यात्वा जपेन्मंत्रराजं लक्षं यावन्नसाधकः ॥ २० ॥ लक्षान्ते दिवसं प्राप्य कुर्याच्च पूजनं महत्। एकाग्रमनसा धीमांस्तस्मिन् पवननन्दने ॥ २१ ॥ दिवारात्रौ जपं कुर्याद्यावत्संदर्शनं भवेत्। सुदृढं साधकं मत्वा निशीथे पवनात्मजः ॥ २२ ॥ सुप्रसन्नस्ततो भूत्वा

प्रयाति साधकाग्रतः । यथेप्सितं वरं दत्त्वा साधकाय कपिः प्रभुः ॥ २३ ॥ सर्वसौख्यमवाप्नोति विहरेदा त्मनः सुखैः । एतच्च साधनं पुण्यं देवानामपि दुर्ल भम् । तव स्नेहात्समाख्यातं भक्तासि यदि पार्वति ॥ २४ ॥ अथ वीरसाधनम् ॥ हनूमतोतिगुह्यं च लि ख्यते वीरसाधनम् । ब्राह्मे मुहूर्त उत्थाय कृतनित्य क्रियो द्विजः ॥ २५ ॥ गत्वा नदीं ततः स्नात्वा तीर्थ मावाह्य त्वष्टधा । मूलमंत्रं ततो जप्त्वा संसिक्तो नित्य संख्यया ॥ २६ ॥ ततो वासः परीधाय गङ्गातीरेऽथ वा शुचौ । उपविश्य । ॐ अंगुष्ठाभ्यां नमः । ॐ

हृदयाय नम इत्यादिना च कराङ्गन्यासौ कुर्यात् । ततः प्राणायामः । अकारादिवर्णानुच्चरन्वामनासापुटेन वायुं पूरयेत् । पञ्चवर्गानुच्चरन्कुंभयेत् । यकाराद्येन रेचयेत् । एवं वारत्रयं कृत्वा मन्त्रवर्णैरङ्गन्यासं कुर्यात् । ततो ध्यानम् । ध्यायेद्रणे हनूमन्तं कपिकोटिसमन्वितम् । धावन्तं रावणं जेतुं दृष्ट्वा सत्वरमागतम् ॥ २७ ॥ लक्ष्मणं च महावीरं पतितं रणभूतले । गुरुं च क्रोधमुत्पाट्य गृहीत्वा गुरुपर्वतम् ॥२८॥ हाहाकारैः सदण्डैश्च कल्पयन्तं जगत्त्रयम् । आब्रह्माण्डसमप्रस्थं कृत्वा भीमं कलेवरम् ॥ २९ ॥

इति ध्यात्वाष्टसहस्रं जपेत्( ८००० ) अस्य मन्त्रः।
श्रीबीजं पूर्वमुच्चार्य पवनं च ततो वदेत्। नन्दनं च
ततो देयं ङेऽन्तसानेऽनलप्रिया। ( श्री पवननन्दनाय
स्वाहा )॥ ३० ॥ दशार्णोऽयं मनुः प्रोक्तो नराणां सु
रपादपः। सप्तदिवसं महाभयं दत्त्वा त्रिभागशेषासु
निशासु नियतमागच्छति यदि साधको मायां
तरति ईप्सितं वरं प्राप्नोति। विद्यां वापि धनं वापि
राज्यं वा शत्रुनिग्रहम्। तत्क्षणादेवमाप्नोति सत्यं
सत्यं सुनिश्चितम्॥ ३१॥इति श्री हरिकृष्णविनिर्मिते
बृहज्ज्योतिषार्णवे धर्मस्कंधे उपासनास्तबके हनुम

दुपासनाध्याये हनुमत्कल्पनिरूपणं नाम एकादशं प्रकरणम् ॥११॥ श्लो० ४९६॥ अथ हनुमद्गह्वरमाह-सुदर्शनसंहितायाम् । विभीषण उवाच । भगवंस्तार्क्ष्यपक्षीन्द्र वद कल्पं हनूमतः।साङ्गोपाङ्गं समन्त्रं च श्रोतुमिच्छामि तत्त्वतः ॥ १॥ तार्क्ष्य उवाच ॥ पवनात्मजमन्त्राणां वदामि गह्वरं स्फुटम् । येन विज्ञानमात्रेण मन्त्रस्यांते स्थिरो भवेत् ॥२ ॥ वेदादिगगनं रेफस्वरं पञ्चदशान्वितम् । सकारं प्रतिलोमेन रुद्रेणारूढमुद्धरेत् ॥३॥ एकादशस्वरोपेतं गगनं संयुतं वदेत् । वामकर्णेन्दुसहितं कान्तं फाग्नियुतं वदेत्

॥ ४ ॥ पुनर्द्वितीयमूतेऽपि मंत्रः पंचाक्षरः स्मृतः । मंत्रस्यास्य पुरा प्रोक्तो महादेवऋषिः स्वयम् ॥ ५ ॥ रामचन्द्रोऽथवा ब्रह्मगायत्रीछन्द उच्यते । देवताहनुमान प्रोक्तः सर्वारिष्टविनाशनम् ॥ ६ ॥ चतुर्थं बीजमुदितं मारुतात्मजसंयुतम् । अञ्जनीसूनुसंयुक्तं तृतीयं शक्तिरुच्यते ॥ ७ ॥ श्रीरामभक्तसंयुक्तं हांशब्दः प्राण ईरितः । श्रीरामलक्ष्मणप्राणकरेति गगन वदेत् ॥८॥ रेफं नारायणाश्लिष्टं मायां हूं तदनन्तरम् । अयं जीवः पुरा प्रोक्तो मंत्रस्यास्य प्रदीपनः ॥ ९ ॥ सर्वकार्यप्रसिद्ध्यर्थं जपेन्मंत्रमिमं

द्विजः । नमो हनुमते रामदूताय पुनरावदेत् ॥ १० ॥
लक्ष्मणप्राणदात्रे च अञ्जनीसूनवे तथा । सीताशो
कविनाशाय इति तस्य पदात्परम् ॥ ११ ॥ लङ्काप्रा
सादकपदाद्भञ्जनाय त्वमुद्धरेत् । ब्रह्मास्त्रब्रह्मशक्ति
श्च निवारणपदं ततः ॥ १२ ॥ ङैन्तैरेतैः स्वबीजाद्यै
र्हृदादिन्यासमारभेत् । ततश्च सर्वमूलेन व्यापक
न्यासमाचरेत् ॥ १३ ॥ प्रणवाद्यामर्ककलां बिंदुना
र्द्धविभूषिताम् । रमां च मायासंमिधमुखतूर्यरस
स्वरैः ॥ १४॥ सबिन्दुभिः पुरश्चाथ शिवाद्यमन्त्रवर्ण
युक् । एतद्धनञ्जयाख्यं शिवस्वरेण संयुतम् ॥ १५॥

बिन्दुमुच्चतदग्राथखमस्त्रेणयुतं वदेत् । वह्निरूढं शूल
पाणिस्वरयुक्तं च बिन्दुमत् ॥ १६ ॥ ततो वदेच्छि
वं चन्द्रसंयुतं वह्निसंस्थितम् । मनुस्वरेण संयुक्तं
भूषितं बिन्दुनोपरि ॥ १७ ॥ ततः क्षाद्यं च शशिना
संयुक्तं शून्यवर्णयुक् ॥ १८ ॥ सबिन्दुकं ततः शैवं
शशिसंस्थे च बिन्दुमत् । शक्रस्वरयुतं वाच्यं रुद्रबी
जादिवान्मनुः ॥ १९ ॥ ततो नतिः समुच्चार्या च
तुर्थ्यंतं हनूमते । ममेति च पदं चोक्त्वा परं षष्ठीयु
तं ततः ॥ २० ॥ चकारक्षयकुष्ठेतिगंडमाला च स्फो
टकम् । क्षतज्वरेति च तत ऐकाहिकं वदेत्ततः ॥ २१ ॥

द्व्याहिकं त्र्याहिकं चेति चातुर्थिकं च संततः । ज्वरं चैव ततो वाच्यं सान्निपातिकमीरयेत् ॥ २२ ॥ ज्वरं भूतज्वरं मंत्रज्वरं शूलभगन्दरः । मूत्रकृच्छ्रकपालेतिशूलकर्णातिशूलकम् । अक्षिशूलोदरशूलहस्तशूलपदं ततः ॥ २३ ॥ प्रवदेत्पादशूलादीन्सर्वव्याधीन्क्षणेन च ॥ २४ ॥ भिंधियुग्मं छिंधियुग्मं नाशयेति द्विधावदेत् । निकृंतयेतियुगलं छेदयेति द्विधा ततः ॥२५॥ भेदयेति द्विधा वाच्यं महावीरपदं ततः। हनुमानिति हाशब्दं द्विधा तु कवचं द्विधा ॥ २६ ॥ घेशब्दं युगलं चोक्त्वा बीजानि च ततो वदेत्।माया

द्वितूर्यंषष्ठैश्च कवन्धास्त्राग्निवल्लभा॥ २७ ॥सप्तत्युत्तर शतं वर्णामंत्रे ह्यस्मिन् प्रकीर्तिताः॥ २८॥अथमंत्रप्र काशः। ॐऐंश्रींह्रांह्रींह्रूंस्फ्रेंह्स्फ्रेंहसौं ह्स्फें ह्सौं ॐ नमोहनुमतेमम परस्य च क्षयकुष्ठगंडमालास्फोटकं क्षतज्वरमैकाहिकं द्व्याहिकं त्र्याहिकं चातुर्थिकं संत तज्वरं सान्निपातिकज्वरंभूतज्वरंमंत्रज्वरशूलभगंद रमूत्रकृच्छ्रकपालशूलकर्णशूलाक्षिशूलोदरशूलहस्त शूलपादशूलादीन्सर्वव्याधीन्क्षणेन भिंधि२ छिंधि२ नाशय२निकृंतय २ छेदय२भेदय२महावीर हनुमन् हांहांघेघेह्रींह्रींहूंहूंफट्स्वाहा। अक्षराणि ( १७० )

अयंरोगप्रशांत्यर्थंजप्तव्यः सततं नृणाम् । भस्म वा
वार्यनेनैव मंत्रयित्वा ददेत्सुधीः ॥ २९ ॥ मंत्रे ये ग
दितारोगास्ते नश्यंत्यस्यचाज्ञया ॥ इतिप्रथममंत्रः ॥
आञ्जनेयस्यमंत्रं च प्रवदामि समासतः ॥३०॥सर्व
लोकहितार्थाय सद्यः प्रत्ययकारकम् । वेदादिमंत्रं
ततो वाच्यं लक्ष्मीं मायां त्रिधोच्चरेत् ॥ ३१ ॥ द्विती
यतुर्यषष्ठैश्च स्वरैः समनुवर्त्तिनीम् । शशिनाहं वह्निसू
स्थमेकारेण विभूषितम् ॥३२ ॥ बिंदुमच्च ततः शून्यं
वाद्ययुक्तं सवह्निकम् । एकादशस्वरोपेतं बिन्दुनोर्ध्वं
विभूषितम् ॥ ३३ ॥ शिवचन्द्राग्निरूढंमौयुक्तंबिन्दु

विभूषितम् । भर्गं सौम्यं शून्यसंस्थमस्त्रेणाग्निसम न्वितम् ॥ ३४॥ अर्कादिकलयायुक्तं बिंद्वाढ्यं विज प्रदम् ॥ हंसयुक्तं मनुकलायुक्त बिंदुविभूषितम् ॥३५॥ बीजकूटास्त्वमी रुद्रा एकादशनिवेशिताः । हृदयंहनुमच्छन्दंचतुर्थ्यन्तंसमुच्चरेत्॥३६। गुहाबलं ततश्चाथ पराक्रममेति च । परस्यचचतुर्वर्णान्भूतप्रेतपिशाचकम् ॥ ३७ ॥ शाकिनीडाकिनीचाथयाक्षिणीपूतनेति च। मारी ततो महामारीकृत्या यक्षोतिराक्षसी ॥ ३८ ॥ ततो भैरववेतालग्रहब्रह्मग्रहेति च । ब्रह्मराक्षसादिकेति जातक्रूरेति चोच्चरेत् ॥ ३९ ॥बा

धाः क्षणेन च हनं द्विधोज्जृंभययुग्मकम्। निरासय द्विधावाच्यं वारयेति द्विधावदेत् ॥ ४० ॥ बंधयेति युगं चैवनुदेतिच द्विधोच्चरेत्। सूदेति च द्विधाप्रोक्तं धुनुचेति द्विधोच्चरेत् ॥ ४१ ॥ द्विधोच्चरेन्मोचयेति मामेनं च ततःपरम् । रक्षेतियुगलंवाच्यंमहाशब्द मतःपरम् ॥ ४२ ॥ माहेश्वररुद्रावतारहात्रिधाक वचं त्रिधा । हुंहुंघेघेत्रिवारंस्यात्कवचास्त्राग्निवल्लभा ॥ ४३ ॥ एकसप्तत्युत्तरशतं मंत्रे वर्णाः प्रकीर्त्तिताः ॥ ४४॥ अथ मन्त्रप्रकाशः ॥ ॐ ऐंश्रींह्रांह्रींहूं स्फ्रें ख्फ्रेंह्सौंह्स्ख्फ्रेंह्सौंॐ नमोहनुमतेमहाबलपरा

क्रम मम परस्य च भूतप्रेतपिशाचशाकिनीडाकिनी यक्षिणी-पूतनामारी-महामारीकृत्यायक्षराक्षसभैरव वेतालग्रहब्रह्मग्रहब्रह्मराक्षसादिकजातक्रूरबाधान् क्षणेन हन२जृंभय जृंभय निरासय २ वारय२बंधय२ नुद २ सूद २ धुनु२ मोचय२मामेनं च रक्ष२महामाहेश्वर रुद्रावतार हा ३ हुं ३ हूं घ ३ हूंफट्स्वाहा ॥ अक्षराणि ( १७१ ) सर्वत्र सर्वभूतानां नाशको हनुमन्मनुः । भस्मवारिसर्षपांश्च सिकतानभिमंत्रयेत् ॥४५॥यत्रक्वापि भयशंका विकिरेत्तत्र तत्र तु । एकैकं वा समूहं वा दशदिक्षु इतस्ततः ॥४६॥ विकीर्य

च भस्मवारि भि तस्य प्रक्षिपेत्तनौ । पानार्थं वारि दातव्यं भस्म चाङ्गे निवेशयेत् ॥ ४७ ॥ इति द्वितीय मंत्रः ॥ उत्तरं चाञ्जनेयस्य मंत्रं वच्मि समासतः । कलौ जप्तस्य सर्वत्र भयहन्ता न संशयः॥४८॥प्रणवं वाग्भवं मां च ह्रां ह्रीं हं च ततः परम् । पूर्ववत्पंचकूटानि बीजानि च ततोच्चरेत् ॥ ४९॥ एकादशोतिकूटानि प्रोच्चार्य नम इत्यपि । हनुमते पदं चोक्त्वा मम शब्दं परस्य च ॥ ५० ॥ महाभयानि पञ्चाणान्सर्प व्याघ्रेति तस्कर । जलाग्निविषजङ्गमस्थावरं सह जेति च ॥५१॥ कृत्रिमापिविषं चाति महासंग्रामकं

ततः । आरण्यवादविवादशस्त्राग्न्यादिकानि च ॥ ५२ ॥ संहरेति द्विधोच्चार्यं विनाशययुगं ततः । दुर्गं संग्रासययुगं त्रोटयद्वितयं तथा ॥ ५३॥ भञ्ज द्विधा भञ्जयाथ द्विधास्तंभय वै द्विधा । कुंठयेति द्विधावाच्यं मोचयेति द्विधोच्चरेत् ॥५४॥ वानरऋक्षेम हेति वीरमामेनमेव हि। चकारं रक्षरक्षेति हकारं च त्रिधोच्चरेत् ॥ ५५॥ कवचं च त्रिधोच्चार्यं घेऽक्षरं च त्रिधावदेत् । क्रोधमस्त्रं वह्निजायासंयुतोमनुरीरितः ॥ ५६ ॥ एकषष्ट्युत्तरशतं मन्त्रे वर्णा निवेशिताः ॥ ५७ ॥ अथ मंत्रप्रकाशः॥ ॐ ऐं श्रीं ह्रां ह्रीं ह्रुं

ह्स्रौं ख्फ्रें ह्सौं ह्स्ख्फ्रें ह्स्रौं नमो हनुमते मम परस्य च महाभयानि सर्पव्याघ्रतस्करजलाग्निविषजङ्गमस्थावर-सहजकृत्रिमोपविष-महासंग्रामारण्यवादविवादशस्त्रास्त्राग्न्यादिकानि संहर २ विनाशय २ दुःखसंत्रासयर त्रोटय त्रोटय भंज २भञ्जय भंजयरस्तंभय २ कुंठय २ मोचय २ वानरऋक्षमहावीरमामेनं च रक्ष २ हा ३ हूं ३ घे ३ हुं फट्स्वाहा॥अक्षराणि (१६१)शस्त्रास्त्रविषसर्पादिव्यथाभयविनाशकः।

मंत्रोऽयं रामदूतस्य चिन्तितेप्सितसाधकः ॥५८॥

गदितः सर्वलोकानां हितार्थं सत्यसाधकः ॥ इति

तृतीयमंत्रः ॥ मारुतेर्मंत्रमन्यच्च ब्रुवे सर्वमनोहरम्
॥ ५९ ॥ सद्यःकलौ च भक्तानां कार्यप्रत्ययकार
कम् । प्रणवो वाक्ततोलक्ष्मीर्हल्लेखा च त्रिधाविधा
॥ ६० ॥ उक्तः स्वरैस्त्रिभिश्चाथ बिन्दुनाङ्कितमस्त
कम् । संपात्य वह्निसंस्थं च ईशानस्वरसंयुतम्
॥६१॥ बिन्द्वाद्यं च ततः प्रोक्तं द्व्युत्तरं करकंशृणु ।
द्वितीयं तु कवर्गस्य पवर्गस्य तदेव हि ॥ ६२ ॥
यवर्गस्य द्वितीयेन संयुक्तं वायुतं कुरु । बिन्दुना भू
षितं मूर्ध्नि ततोन्यच्छृणु बीजकम् ॥ ६३॥ शिवेन्दु
वह्निभं शक्रस्वराढ्यं बिन्दुभूषितम् । प्राणजीवङ्क

हनु.

न्ययुक्तं फानलेरास्वरान्वितम् ॥ ६४ ॥ बिंद्वङ्कितशि

रस्कं च कूटपंक्त्याभिधं महत् । शिवशक्तियुतं चान्य

दिन्दुस्वरसमन्वितम् ॥ ६५ ॥ बिंद्वंकितं विद्धि कूट

मेकादशमितिध्रुवम् । नतिर्हनुमते चेति पश्चाद्राक्षस

कुलेतिवै ॥ ६६ ॥ दावानलद्वादशार्ककोटिचार्कप्रभं

पदम् । ज्वलत्तनूरुहपदं भीमनादममोच्चरत् ॥६७॥

परस्य च पदं दुष्टं दुर्जनाथ महापदम् ॥ पकारकं

पदं वादिविवादिद्वेषकारकम् ॥ ६८ ॥ ततः कार्यभं

जकेति क्रूरप्रकृतिकं पदम् । प्रवृद्धकोपावेशकहन्तु



श्चैतत्पदं ततः ॥ ६९ ॥ कामुकादीनितिपदं दूरस्थे



गह-

६७

तिपदं ततः । समीपस्थान्भूतभविष्यद्वर्त्तमानानर्थो
च्चरेत् ॥ ७० ॥ पुंस्त्रीनपुंसकांश्चातुर्वर्ण्यान्क्षणेनसत्व
रम् । हनद्विधा दहद्विधा संहारयद्विधा वदेत् ॥ ७१ ॥
मोहयेति द्विधा वाच्यं मर्दयेतिद्विधा ततः । द्वेषयेति
द्विधाचोक्त्वा मार्जारमूषकेति च ॥ ७२ ॥ वत्सद्यः प्राणै
श्चततो वियोजयद्विधोच्चरेत् । विध्वंसयद्विधाहित्रि
द्विधा मूकयतेद्विधा ॥ ७३ ॥ पौनरुक्त्याजारयेतिवर्ध
येतिद्विधा ततः जृंभयेति द्विधाचोक्त्वापातयेतिद्वि
धावदेत् ॥ ७४ ॥ ततो मम पदंचोक्त्वा परस्यचततः
पदम् । पाहतलाकामिनां श्रकुरु द्वन्द्वंततो वदेत् ॥ ७५ ॥

दासीभूतान्संपादय द्विधाहाचात्रिधोच्चरेत्। त्रिक्रोधं
चात्रिधा घेच कवचास्त्राग्निवल्लभा ॥ ७६ ॥ वर्णानां
द्विशतं प्रोक्तंपंचषष्ट्युत्तरं मनोः ॥ ७७ ॥ अथमंत्रप्र
काशः। ॐ ऐं श्रीं ह्रां ह्रीं हूं ह्स्फ्रें ख्फ्रें ह्सौं ह्स्ख्फ्रें ह्सौं न
मो हनुमते राक्षसकुलदावानल द्वादशार्ककोट्यर्कप्रभ
ज्वलत्तनूरुह भीमनाद मम परस्य च दुष्टदुर्जनमहाप
कारकवादिविवादद्वेषकारककार्यभंजकक्रूरप्रकृति
कप्रवृद्धकोपावेशकहन्तुकामुकादीन्दूरस्थान् समी
पस्थान्भूतभविष्यद्वर्त्तमानान् पुंस्त्रीनपुंसकांश्चातुर्व
र्ण्यान्क्षणेन सत्वरं हन २ दह २ संहारय २ मोहय २

मर्दय २ द्वेषय २ मार्जारमूषकवत्सद्यः प्राणैर्वियो जय २ विध्वंसय २ हिलि २ मूकय २ जारय २ वर्धय २ जृंभय २ पातय२ मम परस्य च पादतला क्रमितान् कुरु २ दासीभूतान् संपादय२ हा ३ हुं ३ घे ३ हुंफट्स्वाहा । अक्षराणि ( २६५ ) विद्वेषिवैरि दुष्टानां वंशविच्छेदकारकः । मंत्रोऽयं गदितः सत्यं मुनिभिर्मंत्रपारगैः ॥ ७८ ॥ विशिष्यते कलौ सत्यं प्रत्ययायाल्पबुद्धिभिः । महारुद्रावतारस्य जगत्प्रा णात्मजस्य हि ॥ ७९ ॥ मतिं विद्धि वरिष्ठां च सर्व सिद्धिप्रदां नृणाम् । वारिभस्माभिमंत्राणां सिकता

सर्षपांस्तथा ॥ ८० ॥ अभिसंमंत्र्य विकिरेत्सर्वत्र च इतस्ततः । तल्लंघनाद्भवत्येव सर्वे दुष्टास्तु वश्यकाः ॥ ८१॥ इतिचतुर्थमंत्रः ॥ वेदमूर्द्धा तथा वाणी रमाबिन्दुविभूषिता । मामुखेन च वामाङ्गं वामश्रुत्याविभेदना॥८२॥बिन्दुभूषितमूर्धा यद्बीजानि च ततः परम् । जीवचास्त्रार्णयुक्तत्वाद्दहनारूढमेव च ॥८३॥ शिवस्वरसमायुक्तं बिन्दुभूषितमस्तकम् । शून्यमस्त्रार्णसंमूढमाग्निनाधोयुतं तथा ॥ ८४ ॥ एकादशकलायुक्तं बिन्दुमत्तदनंतरम् । जीवांत्यजीवसंयुक्तं वह्न्यारूढं च बिन्दुमत् ॥ ८५ ॥ शतमन्युक

लाद्यं च बीजत्रयमिदं ततः । वह्न्यारूढं यात्यामिति
तदारूढं नमोऽन्तकम् ॥ ८६॥ तदारूढं तु जीवर्णं
तदारूढं शिवं कुरु । वाण्यादिमेन संयुक्तं बिन्दुभू
षितमस्तकम् ॥ ८७ ॥ शिवं जीवयुतं कुर्याच्छतम
न्युकलान्वितम् । मस्तके बिन्दुसंयुक्तमोङ्कारं च तृ
तीयकम् ॥८८॥ नतिर्हनुमते चोक्त्वा त्रैलोक्याक्र
मणेति च । पराक्रमेति श्रीरामभक्त मम परस्य च
॥ ८९ ॥ सर्वशत्रूंश्चतुर्वर्णसंभवानिति वै वद । पुंस्त्री
नपुंसकान्भूतभविष्यद्वर्तमानिति ॥ ९० ॥ दूरस्थां
श्च समीपस्थान्नाना इति ततो वद । नामधेयांस्ततो

नानाजातिसंकरयेति च ॥ ९१ ॥ कलत्रपुत्रमित्रेति
भृत्यबन्धुसुहृत्ततः । समेतान् प्रभुशक्तीतिसहितांश्च
ततः परम् ॥ ९२ ॥ धनधान्यादिसंपत्तियुतान्राजपदं
ततः।पुत्रसेवकमंत्रींश्च सचिवांश्च सखींस्ततः ॥९३॥
आत्यन्तिकान्क्षणेनेति त्वरयैतद्दिनावधि । नानोपायै
रितिपदं ततो मारययुग्मकम् ॥ ९४ ॥ शस्त्रैश्छेदय
युग्मं च अग्निना ज्वालयद्द्विधा । दाहयेतिद्विधावा
च्यमक्षेति च ततो वदेत् ॥ ९५ ॥ कुमारवत्पादतला
क्रमणेन शिलातले । आत्रोटय द्विधा वाच्यं घातये
ति तथा द्विधा ॥९६॥ बंधयद्वौ भूतसंघैः सहभक्षय

युग्मकम् । क्रुद्धचेतसेति नखैर्विदारय द्विधा वद ॥ १७ ॥ देशादस्मादिति तत उच्चाटय द्विधावद । पिशाचवद्भ्रंशयेति द्विधाभ्रामय च द्विधा ॥ १८ ॥ भयातुरान्विसंज्ञांस्तान्सद्यः कुरुयुगं वद । भस्मी भूतांस्तथा वाच्यमुच्छूलय पुनर्वद ॥१९॥भक्तजनव त्सलेति सीताशोकापहारक। सर्वत्र मां तथैनं च रक्ष युग्मं च हात्रयम् ॥१००॥ क्रोधत्रयं घेत्रयं च कव चास्त्राग्निवल्लभा। एकचत्वारिंशदक्षराणित्रीणि शता नि च ॥१०१॥ अथ मंत्रप्रकाशः ॥ ॐऐं श्रींह्रांह्रींह्रूं ह्स्फ्रेंख्फ्रेंह्सौंह्स्ख्फ्रेंह्सौंनमो हनुमते त्रैलोक्याक्रम

णपराक्रम श्रीरामभक्तमम परस्यचशत्रूंश्चतुवणसम
वान्पुंस्त्रीनपुंसकान्भूतभविष्यद्वर्तमानान् दूरस्थान्
समीपस्थान् नानानामधेयान्नानासंकरजातीयान्क
लत्रपुत्रामित्रभृत्यबंधुसुहत्समेतान् प्रभुशक्तिसहिता
न् धनधान्यादिसंपत्तिसंयुतान्राजपुत्रसेवकान् मंत्रि
सचिवसखीनात्यंतिकान् क्षणेन त्वरया एतद्दिनाव
धिनानोपायैर्मारय २ शस्त्रैश्छेदय २ अग्निनाज्वाल
य २ दाहय २ अक्षकुमारवत्पादतलाक्रमणेन शिला
तलेआत्रोटय२ घातय२बंधय भूतसंघैःसह भक्षय२
२ क्रुद्धचेतसा नखैर्विदारय २ देशादस्माडुच्चाटय २

पिशाचवर्गं शय २ भ्रामय २ भयातुरान् विसंज्ञांस्ता
न्सद्यः कुरु २ भस्मीभूतानुद्धूलय २ भक्तजनवत्स
लसीताशोकापहारकसर्वत्र मामेनं च रक्ष २ हा ३
हुं ३ घे ३ हुंफट्स्वाहा ॥ अक्षराणि (३४१) वर्णानां
गणना ज्ञेया दुष्टादिद्वेषिणस्तथा । उच्चाटमृत्युपैशा
चकरणीयो मनुध्रुवम् ॥१०२॥ सप्रत्ययः समर्थश्च
कलौ भक्तेप्सितार्थकृत् । श्रद्धया नियमेनाथ संस्मृ
तो जपितः खलु ॥१०३॥ कार्यं साधयते नूनं सत्यं
सत्यं न संशयः। हनुमद्वीरसामर्थ्याद्दुर्जयो मंत्रविद्भ
वेत् ॥१०४॥ इतिपंचममंत्रः ॥ वेदमूधा तता वाणी

लक्ष्मीबीजविभूषिता। द्वितुर्यं षट्कलाभिन्ना हल्लेखा समुदीरिता ॥ १०५ ॥ बीजान्येतानि षड्विद्धि सर्विंद्वानि महांति च । ततः शिवं जीवसंस्थायांत्यत्वाह्नि प्ररूढितम् ॥ १०६ ॥ पंक्त्यान्त्यस्वरसंयुक्तं बिन्दुयुक्तं ततः परम् । कांत्यफांतसमारूढं बृहद्भानुयुतं स्फुटम् ॥ १०७॥ अर्काद्यस्वरसंयुक्तं बिन्दुयुक्तंततःपरम्। जीवांसं चन्द्रयुक्तं गादिमेन च तथायुतम् ॥ १०८ ॥ अस्त्रवर्णसमोपेतमधः पावकसंयुतम् । ईशस्वरेण संयुक्तं बिन्दुमुत्कटमुत्तमम् ॥ १०९ ॥ शिवः शक्तिश्च वह्निश्च शतमन्युकलायुतम् । बिन्दुना भूषितं पूर्वांत

पूर्वोऽयं समुदीरितः॥११०॥ शक्त्यारूढं शिवो ज्ञेयो बिन्दुभूषितमस्तकः। चतुर्दशस्वरोपेतः पञ्चकूट मिदं क्रमात् ॥ १११ ॥ पञ्चकूटानि बीजानि ह्येका दश क्रमेण तु। पुनर्वेदास्तु मंत्रोक्ता नतिर्हनुमते ततः ॥ ११२ ॥ प्रकटेति ततश्चोक्त्वा पराक्रमपदं ततः। आक्रान्तपदमेतच्च दिङ्मण्डलपदं ततः ॥ ११३ ॥ यशोवितानेतिपदं धवलीकृतवैपदम्। जगत्त्रितयव ज्रेति देहज्वलदितीरयेत् ॥ ११४ ॥ अग्निसूर्यकोटि समप्रभस्तनुरुहंपदम्। रुद्रावतारेति ततो लङ्कापुरी दहनाय वै ॥११५॥ (?) दधिलङ्घनतश्छेत्ता दशग्री

वशिरस्ततः । कृतान्तकसीताश्वासनततोवायुसुतेति
च ॥ ११६ ॥ अञ्जनीगर्भसंभूतश्रीरामेतिपदं ततः ।
लक्ष्मणानन्दकरायेति कपिसैन्यपदं वद ॥ ११७ ॥
प्राकारसुग्रीवपदंसख्यकारणवै ततः । वालिनिबर्हण
पदंकारणेतिपदं वद ॥ ११८ ॥ द्रोणपर्वतोत्पाटनपदं
वद ततः परम् । अशोकवनचेत्युक्ता विदारणपदं ततः
॥ ११९ ॥ अक्षकुमारकेति च छेदनेति ततः पदम् ।
वनरक्षाकरपदं समूह इति चोच्चर ॥ १२० ॥ विभ
ञ्जनब्रह्मास्त्रेतिब्रह्मशक्तिपदं वद । ग्रसनेतिलक्ष्मणेति
शक्तिभेदनिवारण ॥ १२१ ॥ शल्यविशल्यौषधीति

समानयनवै ततः । बालोदितभानुपदं मण्डलग्रसने
ति च ॥१२२॥ मेघनादहोमपदं विध्वंसनपदं ततः।
इंद्रजिद्वधकारणसीतारक्षककं पदम् ॥ १२३ ॥ तत
श्च राक्षससंघाविदारणपदं ततः। कुम्भकर्णादिकवध
परायणपदं वद ॥ १२४ ॥ श्रीरामभक्तितत्परसमु
द्रेति ततः पदम् । व्योमद्रुमलंघनेति महासामर्थ्यवै
पदम् ॥ १२५ ॥ महातेजःपुञ्जपदं विराजमानवैपद
म् । स्वामिवचनेति पदं संपादितार्जुनेति च ॥१२६॥
संयुगसहायेतिच कुमारेतिपदं ततः । ब्रह्मचारिन्नि
तिपदं गंभीरेति पदं ततः ॥ १२७ ॥ शब्दोदयदाक्षि

णाशामार्तण्डमेरुवैपदम् । पर्वतपीठिकार्चनसकलेति
पदं ततः ॥ १२८ ॥ मन्त्रागमाचार्यपदं मम सवग्र
हेति च । विनाशनसर्वपदं ज्वरोच्चाटनसर्ववै॥ १२९॥
विषविनाशनसर्वापत्तिनिवारणेति च । सर्वदुष्टादि च
पदं निबर्हणपदं ततः ॥ १३० ॥ सर्पव्याघ्रादिकभ
यनिवारणपदं ततः । सर्वशत्रुच्छेदनेति पदं मम पर
स्य च॥ १३१॥ततस्त्रिभुवनं पुंस्त्रीनपुंसकात्मकं पदम्
ततः सर्वजीवजातं वशयेति द्वयं वदेत् ॥ १३२ ॥
ममाज्ञाकारकं चेति सपादय द्विधा वदेत् । ततो
नानानामधेयान् सर्वराज्ञः पदं वद ॥ १३३ ॥ ततः

सपरिवारांश्च ततश्च मम सेवकान् । कुरुयुग्मं सर्वपदं
शस्त्रास्त्रेतिविषाणि च ॥ १३४ ॥ विध्वंसयद्विधोच्चार्य
मायां पूर्ववदुच्चरेत् । हात्रिधा च समुच्चार्य तद्वदेहि
त्रिधोच्चरेत्॥ १३५॥ पूर्वोदितं पञ्चकूटं वैपरीत्येन चो
च्चरेत् । सर्वशत्रून् हनद्वन्द्वं परबलानि ततः परम्
॥ १३६॥ परसैन्यानि क्षोभय द्विधा मम पदं ततः।
ततः सर्वं कार्यजातं साधयेतिद्विधावद ॥ १३७ ॥
सर्वदुष्टजनोच्चाय मुखानि कीलयद्विधा । घे त्रिधोच्चा
र्य हाकरं त्रिधा क्रोधं त्रिधा ततः ॥ १३८ ॥ त्रिधा
चास्त्रं वह्निजायासंयुतोयं मनुः स्मृतः । मन्त्रे वर्णाः

 

समाख्याता द्विनवत्युत्तराणि च ॥ १३९॥ शतानि पञ्च सत्यं हि मन्त्रविद्भिः पुरातनैः ॥ १४० ॥ अथ मंत्रप्रकाशः । ॐ ऐंश्रींह्रांह्रींह्रंह्स्फ्रैंह्स्त्रौंहस्ख्फ्रेंहसौं ॐनमो हनुमते प्रकटपराक्रम आक्रान्तदिङ्मण्डल यशोवितानधवलीकृतजगत्रितय वज्रदेह ज्वलदग्निसूर्यकोटिसमप्रभतनूरुहरुद्रावतार लङ्कापुरीदहन उदधिलंघन दशग्रीवशिरःकृतान्तक सीताश्वासन वायुसुत अञ्जनीगर्भसंभूत श्रीरामलक्ष्मणानंदकर कपिसैन्यप्राकार सुग्रीवसख्यकारण वालिनिबर्हण कारण द्रोणपर्वतोत्पाटन अशोकवनविदारण अक्षकुमारक

च्छेदन वनरक्षाकरसमूहविभञ्जन ब्रह्मास्त्रब्रह्मशक्ति
ग्रसन लक्ष्मणशक्तिभेदनिवारण शल्यविशल्यौषधि
समानयन बालोदितभानुमण्डलग्रसन मेघनादहोम
विध्वंसन इन्द्रजिद्वधकारण सीतारक्षक राक्षससंघ
विदारण कुंभकर्णादिवधपरायण श्रीरामभक्तितत्पर
समुद्रव्योमद्रुमलंघन महासामर्थ्य महातेजःपुंजवि
राजमान स्वामिवचनसंपादित अर्जुनसंयुगसहाय
कुमारब्रह्मचारिन् गंभीरशब्दोदयदक्षिणाशामार्तण्ड
मेरुपर्वतपीठिकार्चन सकलमंत्रागमाचार्यममसर्वग्र
हविनाशन सर्वज्वरोच्चाटन सर्वविषविनाशन सर्वाप

त्तिनिवारण सर्वदुष्टादिनिबर्हण सर्पव्याघ्रादिभय निवारण सर्वशत्रुच्छेदन मम परस्य च त्रिभुवनपुं स्त्रीनपुंसकात्मकसर्वजीवजातं वशय २ ममाज्ञाका रकं संपादय२नानानामधेयान्सर्वराज्ञःसपरिवारान् मम सेवकान् कुरु २सर्वशस्त्रास्त्रविषाणि विध्वंसय२ ह्रांह्रींहूं हां ३ एहि ३ ह्सौं ह्स्ख्फ्रें ह्स्रौं ख्फ्रें ह्स्फ्रें सर्वशत्रून् हन२परबलानि परसैन्यानि क्षोभय२मम सर्वकार्यजातं साधय २ सर्वदुष्टजनमुखानि की लय २ घे ३ हा ३ हूं ३ फट् ३ स्वाहा । अक्षराणि (५१६) मंत्रोऽयं वायुपुत्रस्य महाबलयशस्विनः ।

एकादशाख्यरूपस्य रामदूतपदात्मनः ॥१४१॥ सर्वकार्यार्थसंसिद्ध्यै गदितः सर्वसिद्धिदः। रक्षाविधौ प्रयोक्तव्यः क्षते शस्त्रभये तथा।१४२। वश्ये च विजये वादे स्तंभे सर्वत्र नोदितः। दुष्टग्रहे च संग्रामे व्याघ्रचौरभये द्युते॥१४३॥ विषबंधविमोक्षे च क्रोधस्तंभो विशेषतः। रिपुदुर्जनदुष्टानां निग्रहोच्चाटने तथा ॥१४४॥ प्रयोक्तव्यो विशेषेण सत्वरं फलते ध्रुवम् । किमत्र बहुनोक्तेन वर्णितेन पुनःपुनः ॥ १४५॥ यदीच्छेत्प्रत्ययं द्रष्टुं प्रयोक्तव्योऽयमद्भुतः। कार्यः संमोहने सत्यं सत्यं सत्यं न संशयः॥ १४६॥इति षष्ठः ॥

द्वादशाक्षरविद्याया विकृतिः कथ्यतेऽधुना। शिवबिन्दु स्वराक्रान्तं बिन्दुमत्कुरुचादिमम् ॥ १४७ ॥ पूर्वो दितं पंचकूटं बीजषट्कं ततो वदेत् । हनुमांश्च चतुर्थ्य न्तः संयोज्योहपुरःसरम् ॥ १४८॥ द्वादशार्णा महा विद्या यस्य कस्यापि मा वद । रहस्यं ते मयाख्यातं वाल्मीकिमुनिनोदितम् ॥ १४९ ॥ ऋष्यादिकं पूर्वमेव सर्वं च विनिवेदितम् । एकमेवाहि सर्वेषां सत्यं सत्यं च नान्यथा ॥ १५० ॥ विशेषोऽत्र षडङ्गानां षट् कूटैः कुरु तेन च । कराङ्गुलीषु विन्यासः कार्यकारी शुभो मतः ॥ १५१ ॥ एवमङ्गेषु विन्यस्य मंत्रवर्णा

स्ततो न्यसेत् । मूर्ध्नि भाले दृशोरास्ये गले दोष्णो
र्हृदम्बुजे ॥ १५२ ॥ कुक्षौ नाभौ ध्वजे जानुद्वये पद
द्वये न्यसेत् । मंत्रपदैरष्टभिश्च देहाङ्गेष्वेषु संस्मृतः
॥ १५३ ॥ मूर्ध्नि भाले तथा कंठे नाभावूर्वोस्तु जङ्घयोः ।
पादयोश्चैव कर्त्तव्यो ध्यानं पूर्वोदितं कुरु ॥ १५४ ॥
मुद्राः पूर्वोदिताः कार्याः सर्वमेव हि पूर्वजम् । वानरी
चास्य मुद्रास्यात्तां शृणुष्व वदाम्यहम् ॥ १५५ ॥
करौ संपुटितौ कृत्वा समाश्लिष्टाङ्गुलीस्फुटम् । अङ्गुष्ठौ
द्वौ प्रलोपित्वा अन्तर्गर्भस्थितौ कुरु ॥ १५६ ॥ हृदो
परिस्थितौ तौ तु मुकुलाकृतिसंयुतौ । स्वामिपादे

स्थिता दृष्टिर्मुद्रोपर्यथ वै स्थिता ॥ १५७ ॥ ज्ञेयेयं वानरी मुद्रा चैतन्मंत्रं जपेद्ध्रुवम् । तर्जन्यग्रेङ्गुष्ठमूले कृत्वान्याङ्गुलयोरपि ॥ १५८ ॥ स्यात्तत्पुटितयोः पाण्योर्मुद्रा वानरसंज्ञिका । इत्थं सर्वं निगदितं हनुमन्मंत्रगह्वरम् ॥ १५९ ॥ श्रद्धया परया भक्त्या सेवितोऽखिलसिद्धिदः । पुरश्चर्यास्य मंत्रस्य प्रोक्ता चार्कसहस्रिका ॥ १६० ॥ भौमस्य वासरे पूजा कार्या हनुमतो ध्रुवम् । प्रियङ्गवो व्रीहयश्च दध्याज्यक्षीरसंयुतैः ॥ १६१ ॥ कदलीमातुलिङ्गाम्रफलैर्नानावि धैर्हुनेत् । दशांशेन ततो ब्रह्मचारिणो भोजयेद्ध्रुव

म्॥ १६२॥ द्वाविंशतिसुसंख्याकान्विप्रान् संभोजये
दथ । अष्टोत्तरशतेनापि मंत्रयेद्भस्म वार्यपि॥ १६३॥
ग्रहदोषेऽपि नीरेण मार्जयेत्पावयेत्तनुम् । हनुमत्प्र
तिमा कार्या ततो भूताङ्कुशस्य च ॥ १६४ ॥ पूर्वो
त्तरगतेनैव मूलेनाङ्गुष्ठमात्रतः । सर्वावयवसंपन्ना
च्चित्तप्राशस्त्यकारिणी ॥ १६५ ॥ प्राणसंस्थापनं
तस्यां कृत्वा वै मारुतेर्ध्रुवम् । सिंदूरचार्चितां कृत्वा
तथाभ्यर्च्योपचारकैः॥ १६६॥मंत्रितानेन मंत्रेण तत
स्तान्द्वारदेशके । खनित्वा निक्षिपेद्भूमौ ग्रहस्याभि
मुखं निशि ॥ १६७॥ भूतजा विषजा बाधा ग्रहजा

कूटमन्त्रजाः । चेटकादिभवा वापि व्याधिज्वराभि
घातजा ॥ १६८॥ चौराग्निबाधा च तथा न भवेत्तद्गृहे
रिजा । तद्गृहं धनधान्यादिसर्वसमृद्धिसंयुतम् । १६९।
रात्रौरात्रौ जपेन्मंत्रं षट्शतं त्रिशतं तथा । दशवा
सरपर्यंतं राजशत्रुभयं हरेत् ॥ १७० ॥ अभिचार
ज्वरे भूतज्वरे च भस्मना तनुम् । मन्त्रितेनाम्भसा
वाथ ताडयेद्दोषपूर्वकम् ॥ १७१ ॥ त्रिदिनाज्ज्वरमु
क्तिः स्यान्नात्र कार्या विचारणा । औषधे च रसे मंत्रे
दशवारं जपेद्बुधः ॥ १७२ ॥ तेनाभिमंत्रितं दत्तं सर्वं
सफलतां व्रजेत् । शस्त्रधाराग्रसंस्तंभे शतवारं जपेद

बुधः ॥ १७३ ॥ तेनाभिमंत्रितं तोयं भस्म तस्य प्र
दापयेत् । भस्मना चर्चितं देहं पयश्च प्राशितं ध्रुवम्
॥ १७४ ॥ शस्त्रस्तंभो भवेत्तस्य सत्यं सत्यं न संश
यः । शस्त्रक्षतेषु लूतासु रक्तग्रंथ्यादिसंभवे ॥ १७५ ॥
भस्मना पयसा तत्र त्रिवारं चाभिमंत्रितम् । न व्यथा
न च पूयं स्यात्संशोषयति तद्व्रणम् । १७६ । सप्तवत्सर
पर्यंतं विद्वेषोच्चाटने जयः । सूर्यास्तं च समारभ्य का
रयेत्सुबुधोत्तमः ॥ १७७ ॥ अरुणोदयपर्यन्तं भस्म
कीलाभिमंत्रितम् । तद्द्वारे पूरिते गेहे रोपिते वापि
तत्क्षणात् ॥ १७८ ॥ ततस्तस्योच्चाटनं स्यात्परि

वारयुतस्य च । पुत्रादिभिः सर्वलोकैः पौरैर्जानपदैः
सह ॥ १७९ ॥ विद्वेष्यते प्राणघातंसत्यंसत्यंवचोमम ।
भस्मांबुमंत्रितं यस्य देहं चन्दनमिश्रितम् ॥ १८० ॥
चर्चितं पयः खाद्यादियोजितं यस्य दापितम् । स व
श्यो जायते नूनं प्राणैरपि धनैरपि ॥ १८१ ॥ दासतां
याति देवोऽपि मनुष्याणां च का कथा । क्रूरसत्त्वानि
चान्यानि वशयेदमुना खलु ॥ १८२ ॥ प्रकारेण महा
वीर ज्वलनः शीततामियात् । दिव्यस्थाने प्रकर्त्तव्यो
निःशंकैरहुताशनैः ॥ १८३ ॥ भवत्येव न संदेहो
लोहतैलेषु संस्थितः । मारणे क्रुद्धचित्तेन श्मशाने

निशि भूतले ॥ १८४ ॥ रिपोः प्रतिकृतिं कृत्वा भस्मनाप्यथवा मृदा । संस्थाप्य पूर्ववत्प्राणान्कृत्वा यत्नेन मंत्रवित् ॥ १८५ ॥ प्रतिमाहृदि तन्नाम लेख्यं चैव प्रयत्नतः । शस्त्रेण भेदनं कुर्यान्मंत्रमुच्चारयन् क्रुधा ॥ १८६ ॥ छिंधिभिंधिमारयेति नामान्ते च समुच्चरेत् । एवं सप्तदिनं कुर्वन्दंतोष्ठौ च निपीड्य वै १८७ कृत्वा होमं विधानेन राजिकालवणैः सह । उन्मत्त फलपुष्पैश्च श्लेष्मातकाविभीतकैः ॥ १८८ ॥ विषरोमनखैश्चैव काककौशिकगृध्रकैः । पक्षैः कटुकतैलाक्तै रर्द्धचंद्राकृतौ हुनेत् ॥ १८९ ॥ स्थण्डिले मुक्तकेशस्तु

सांकया मुद्रया बुधः । दक्षिणाशामुखो भूत्वा पल्ल
वोच्चारणं कुरु ॥ १९० ॥ त्रिशतावृत्तिभेदेन सप्तवा-
सरमध्यतः । शत्रुर्मृत्युमवाप्नोति रुद्रेणापि सुरक्षितः
॥ १९१ ॥ दिनत्रयं रात्रिभागे श्मशाने षट्शतं
जपेत् । प्रेतमुत्थापयेत्सत्यं वेतालः किङ्करो भवेत्
॥ १९२ ॥ शुभाशुभं च वदति मंत्रिणा सह निश्च
यात् । भाषां ददाति सत्यां च कार्यंति करोति च
॥१९३॥ भस्मांबु मंत्रितं रात्रौ सहस्रावृत्तिकं खलु ।
दिनत्रयं ततश्चैव तत्क्षिपेत्प्रातिमासु च ॥ १९४ ॥
यासु कासु च स्थूलासु लघुष्वापि विशेषतः । मंत्रप्र

भावाच्चलनं भवत्येव न संशयः ॥ १९५ ॥ मंत्रेणानेन सिद्धेन यदसाध्यं च साधयेत् । वश्ये भये विवादे च शस्त्रे संग्रामसंकटे ॥ १९६ ॥ द्यूते दिव्ये स्तंभने च विद्वेषे मारणे तथा । मृतकस्थापने चैव प्रतिमाचालने तथा ॥ १९७ ॥ विषव्याधेर्ज्वरे भूतग्रहे कृत्यादिमोचने। क्षते ग्रंथौ महारण्ये दुर्गे व्याघ्रे च दन्तिनि ॥ १९८ ॥ क्रूरसत्त्वेषु सर्वेषु शस्त्रबंधे विमोक्षणे । बंधमोक्षे मारणे च मोहशांतौ नियोजयेत् ॥ १९९ ॥ मंत्रमेनं हनुमतो नानाकार्यप्रसाधनम् । बंधमुक्तौ जपेन्मंत्रं रात्रौ रात्रौ च निर्भयः ॥ २०० ॥ लिखित्वा प्रतिमां

भूमौ मारुतेरसकृन्नरः । स्वनामाक्षरसंघं तु द्वितीया न्तं समालिखेत् ॥२०१॥ मंत्रस्यान्ते तथा मंत्रं वि मोचयविमोचय । मार्जयेद्वामहस्तेन पुनस्तथैव लेख येत् ॥२०२॥ एवमष्टाधिकशतं लेखयेन्मार्जयेन्नरः । एवं कुर्यान्निबद्धो यः शृङ्खलाभिर्दृढं नरः ॥ २०३ ॥ महापराध संयुक्तः प्राणहानर्थकारकः । स सप्तदिन मध्ये तु बंधनान्मुच्यते ध्रुवम् ॥ २०४॥ हनुमान्वश यित्वाशु स्वयं तं मोचयेन्नरः । न तं दंडयितुं शक्ता राजानो रिपवो जनाः ॥२०५॥ हवनान्यपि संत्यत्र दशांशेन निबोधय । स्तंभने चार्द्रयवकान्यग्रोधस्य

फलानि च ॥२०६॥ हारिद्रा च तथा प्रोक्ता तिलकं शल्लकीफलम् । शाल्मलीकुसुमान्याहुर्मधुत्रययुतानि च ॥२०७॥ उच्चाटने निगदिताः श्लेष्मातकविभीतकाः । वश्यार्थं सर्षपाद्राक्षामधूकानि च गुग्गुलः ॥ २०८॥ विद्वेषे करवीराणां पत्राणि समिधस्तथा । श्लेष्मातकविभीतानां समिधो जीरकं तथा ॥२०९॥ मरीचं रामठं चैव कटुतैलसमन्वितम् । ज्वरे तापे च शूले च गण्डमालाभगंदरे ॥ २१० ॥ दूर्वागुडूचीखंडानि साज्यक्षीरदधीनि च । शूल एरण्डसमिधःकुबेराक्षस्तथैव च ॥ २११ ॥ निर्गुंडीसमिधश्चैव तिलतै

लसमन्विताः । लक्ष्मीप्राप्तौ सरोजानि बिल्वपत्राणि चैव हि ॥२१२॥ समिधस्तस्य होतव्या मधुत्रयसमन्विताः । पनसाद्यं नालिकेरमिक्षवः कदलीफलम् ॥ २१३ ॥ सर्वसंतोषकृद्धोमो मधुत्रयसमन्वितः । सौभाग्यसुखसंपत्तिसाधकं हवनं शृणु ॥ २१४ ॥ कर्पूरकेसरं नाभिचंदनं रोचनं तथा । तजपत्रं वीरणं च लवङ्गैलागुरुस्तथा ॥ २१५॥ मांसी वरा जातिपत्रं तत्फलं लोहबाणकम् । साज्यान्येतानि सर्वत्र विज्ञेयानि मनीषिभिः ॥ २१६॥ पुष्पैः सुगंधिभिर्वापि प्राप्यते चोत्तमः सदा । द्रोहे च मारणे ज्ञेयं विषं च

राजिका तथा ॥२१७॥ काककौशिकगृध्राणां पक्षा श्चापिजयातथा। गृहधूमकराश्चैवलवणंकटुतैलकम् २१८पादपांसुतथाराजिलवणं कषणे स्मृतम्। उन्मत्त फलपुष्पाणि समिधो मोहने स्मृताः॥२१९॥ धान्यैः संप्राप्यते धान्यमन्नैरन्नसमृद्धयः। तैलाज्यक्षीरदधि भिर्महीगजसमृद्धयः ॥ २२० ॥ एवं नानाप्रयोगांश्च साधयेन्मंत्रवित्तमः। पुरश्चर्याजपेनैव हनूमन्तं च सेवयेत्॥२२१॥ इतिश्रीहरिकृष्णविनिर्मिते बृ०ध० उपासनास्तबके हनुमदुपासनाध्याये हनुमद्गह्वरनि रूपणं द्वादशं प्रकरणम् ॥१२॥श्लोकाः ॥ ७०६ ॥

अथ हनुमत्पटलम् ॥ दृष्ट्वा तंत्राण्यनेकानि पुराणानि विशेषतः। हनुमत्पटलं वच्मि नानाभेदसमन्वितम् ॥ १ ॥ तत्र मंत्रमहोदधौ—अथोच्यंते हनुमतो मंत्राः सर्वेष्टसिद्धये। इन्द्रस्वरेन्दुसंयुक्तो वराहो हसफाग्नयः ॥२॥ झिण्टीशाबिंदुसंयुक्ताद्वितीयं बीजमीरितम्। गदीयांताग्निरुद्रेन्दुसंयुतःस्यात्तृतीयकम् ॥ ३ ॥ हसरामनुचन्द्राढ्याश्चतुर्थं हसखाफराः। शिवेन्द्राढ्याः पञ्चमं स्याद्धसौ मन्विंदुगौ परम् ॥४॥ ङेयुतो हनुमान्हार्दं मंत्रोऽयं द्वादशाक्षरः। रामचन्द्रो मुनिश्चास्य जगतीछंद ईरितम् ॥ ५ ॥

हनुमान् देवताबीजं षष्ठं शक्तिर्द्वितीयकम् । षड्बी
जैरंगषट्कं स्यान्मूर्ध्नि भाले दृशोर्मुखे ॥६ ॥ कण्ठे च
बाहुद्वितये हृदि कुक्षौ च नाभितः । लिङ्गे जानुद्वये
पादद्वये वर्णान् क्रमान्न्यसेत् ॥७॥ षड्बीजानि पदद्वंद्वे
मूर्ध्नि भाले मुखे हृदि । नाभावूर्वोर्जंघयोश्च पाद
योर्विन्यसेत्क्रमात् ॥ ८ ॥ बालार्कायुततेजसं त्रिभु
वनप्रक्षोभकं सुंदरं सुग्रीवादिसमस्तवानरगणैः संसे
व्यपादाम्बुजम् । नादेनैव समस्तराक्षसगणान् संत्रा
सयन्तं प्रभुं श्रीमद्रामपदाम्बुजस्मृतिरतं ध्यायामि
वातात्मजम् ॥ ९ ॥ एवं ध्यात्वा जपेदर्कसहस्रं जित

मानसः । दशांशं जुहुयाद्व्रीहीन् पयोदध्याज्यसंयु
तान् ॥ १० ॥ विमलादियुते पीठे पूजा कार्या हनू
मतः । केसरेष्वंगपूजा स्याद्दलेष्वन्यांस्तदाह्वयान्
॥ ११ ॥ रामभक्तो महातेजाः कपिराजो महाबलः ।
द्रोणाद्रिहारको मेरुपीठिकार्चनकारकः ॥ १२ ॥
दक्षिणाशाभास्करश्च सर्वविघ्ननिवारकः । एवं नामानि
संपूज्य दलाग्रेषु च वानरान् ॥ १३ ॥ सुग्रीवम
गदं नीलं जाम्बवंतं नलं तथा । सुषेणं द्विविदं मैन्दं
पूजयेद्दिक्पतीनपि ॥ १४ ॥ एवं सिद्धे मनौ मन्त्री
स्वपरेष्टं प्रसाधयेत् । कदलीबीजपूराम्रफलैर्हुत्वा स

हस्तकम् ॥ १५ ॥ द्वाविंशतिं ब्रह्मचारिविप्रान् संभो
जयेदथ। एवंकृते महाभूतविषचौराद्युपद्रवाः॥ १६॥
नश्यंति क्षणमात्रेण विद्वेषिग्रहदानवाः। अष्टोत्तर
शतं वारि मन्त्रितं विषनाशनम् ॥ १७ ॥ रात्रौ नव
शतं मन्त्रं जपेद्दशदिनावधि। यो नरस्तस्य नश्यंति
राजशत्रूत्थभीतयः ॥ १८ ॥ अभिचारोत्थभूतोत्थ
ज्वरे तन्मन्त्रितैर्जलैः। भस्माभिः सलिलैर्वापि ताड
येज्ज्वारिणः क्रुधा ॥ १९ ॥ दिनत्रयाज्ज्वरान्मुक्तः
स सुखं लभते नरः। तन्मन्त्रितौषधं जग्ध्वा नीरोगो
जायते ध्रुवम् ॥ २० ॥ तन्मन्त्रितं पयः पीत्वा योद्धुं

गच्छेन्मनुं जपन् । तज्जतभस्मालिप्तांगः शस्त्रसं
घैर्न बाध्यते ॥ २१ ॥ शस्त्रक्षतं व्रणः शोफो लूता
स्फोटोपि भस्मना । त्रिमन्त्रितेन संस्पृष्टाः शुष्यंत्य
चिरतो नृणाम् ॥ २२॥ सूर्यास्तमयमारभ्य जपेत्सू
र्योदयावधि । कीलकं भस्म चादाय सप्ताहावधिसं
युतः ॥ २३ ॥ निखनेद्भस्मकीलौ तौ विद्विषां द्वार्य
लक्षितः । विद्वेषं मिथ आपन्नाः पलायन्तेऽरयोऽचि
रात् ॥ २४ ॥ अभिमन्त्रितभस्माम्बु देहचंदनसंयु
तम् । खाद्याद्वियोजितं यस्मै दीयते स च दासव
त॥२५॥ क्रूराश्च जन्तवोनेन भवंति विधिना वशाः।

ईशानदिक्स्थमूलेन भूताङ्कुशतरोः शुभाम् ॥ २६॥ अङ्गुष्ठमात्रां प्रतिमां प्रविधाय हनूमतः । प्राणसंस्थापनं कृत्वा सिन्दूरैः परिपूज्य च ॥ २७ ॥ गृहस्याभिमुखद्वारे निखनेन्मन्त्रमुच्चरन् । भूताभिचारचौराग्निविषरोगनृपोद्भवाः ॥ २८ ॥ सञ्जायन्ते गृहे तस्मिन्न कदाचिदुपद्रवाः । प्रत्यहं धनपुत्राद्यैरेधते तद्गृहं चिरम्॥ २९॥ निशि श्मशानभूमिस्थो भस्मना मृत्स्नयापि वा।शत्रोःप्रतिकृतिं कृत्वा हृदि नाम समालिखेत् ॥ ३० ॥ कृतप्राणप्रतिष्ठां तां भिंद्याच्छस्त्रैर्मनं जपन् । मन्त्रांते प्रोच्चरेच्छत्रोर्नाम छिंधि

च भिंधि च ॥ ३१॥ मारयेति च तस्यान्ते दंतैरोष्ठं निपीडच्य च। पाण्योस्तले प्रपीडच्याथ त्यक्त्वा तां सदनं व्रजेत् ॥ ३२ ॥ एवं सप्तदिनं कुर्वन् हन्याच्छत्रून्छिवावितान् । अर्द्धचंद्राकृतौ कुण्डे स्थंडिले चाहुतं चरेत् ॥३३॥ मुक्तकेशः श्मशानस्थो लवणै राजिकायुतैः । उन्मत्तफलपुष्पैश्च नखरोमविषैरपि ॥ ३४ ॥ काककौशिकगृध्राणां पक्षैः श्लेष्मातकाक्षजैः ।समिद्भिरैश्च त्रिशतं दक्षिणाशामुखो निशि ॥ ३५ ॥ सप्तघस्रानिदं कुर्वन् मारयेद्रिपुमुद्धतम् । शतषट्कं जपेद्रात्रौ श्मशाने दिवसत्रयम् ॥ ३६ ॥

ततो वेताल उत्थाय वदेद्भावि शुभाशुभम् । उदितं
कुरुते सर्वं किंकरीभूय मन्त्रिणः ॥३७॥ हनुमत्प्र
तिमां भूमौ विलिखेत्तत्पुरो मनून् । साध्यनाम द्वि
तीयान्तं विमोचय विमोचय ॥३८॥ तत्सर्वं मार्जये
द्वामहस्तेनाथ पुनर्लिखेत् । एवमष्टोत्तरशतं लिखि
त्वा मार्जयेत्पुनः ॥३९॥ एवंकृते पराधीनो मुच्यते
निगडात्क्षणात् । एवं विद्वेषणादीनि कुर्यात्तत्पल्लवं
लिखन् ॥ ४० ॥ वश्यार्थे सर्षपैर्होमो विद्वेषे करवी
रजैः । कुसुमैरिध्मकाष्ठैर्वा जीरकैर्मारिचैरपि ॥४१॥
ज्वरे दूर्वागुडूचीभिर्दध्ना क्षीरेण वा घृतैः । शूले होमः

कुबेराक्षैरेरंडसमिधा तथा ॥ ४२ ॥ तैलाक्ताभिश्च निर्गुंडीसमिद्भिर्वा प्रयत्नतः । सौभाग्ये चन्दनै श्चन्द्रै रोचनैलालवङ्गकैः ॥ ४३ ॥ सुगंधपुष्पैर्वस्त्राद्यै तत्तद्धान्यैस्तदामये । तत्पादरजसा राजीलवणा क्तेनमृत्यवे ॥ ४४ ॥ किं बहूक्तैर्विषव्याधौ शान्तौ मोहे च मारणे । विवादे स्तंभने द्यूते भूतप्रेतादिस ङ्कटे ॥ ४५ ॥ वश्ये युद्धे नृपद्वारे समरे चौरसङ्कटे । मन्त्रोऽयं साधितो दद्यादिष्टसिद्धिं ध्रुवं नृणाम् ॥ ४६ । वक्ष्ये हनुमतो यंत्रं सर्वसिद्धिप्रदायकम् । वलयात्रि तयं कृत्वा पुच्छाकारसमन्वितम् ॥ ४७ ॥ साध्य

नामलिखेन्मध्ये पाशबीजप्रवेष्टितम् । उपर्यष्टदलं
कृत्वा वर्म पत्रेषु संलिखेत् ॥ ४८ ॥ वलयं बहिरा
लिख्य तद्बहिश्चतुरस्रकम् । चतुरस्रस्य रेखाग्रे त्रिशू
लानि समालिखेत् ॥ ४९ ॥ भूपुरस्याष्टवज्रेषु हसौं
बीजं लिखेत्ततः । कोणेष्वंकुशमालिख्य मालामंत्रेण
वेष्टयेत्॥५०॥तत्सर्वं वेष्टयेद्यन्त्रं वलयात्रितयेन च ।
वस्त्रे शिलायां फलके ताम्रपात्रेऽथ कुड्यके ॥ ५१ ॥
भूर्जे वा ताडपत्रे वा रोचनानाभिकुङ्कुमैः । यंत्रमेत
त्समालिख्य त्यक्ताशो ब्रह्मचर्यवान् ॥ ५२ ॥ कपेः
प्राणान्प्रतिष्ठाप्य पूजयेत्तं यथाविधि । सर्वदुःखनि

वृत्त्यै तद्यंत्रमात्मनि धारयेत् ॥५३॥ ज्वरमार्यभिचारघ्नं सर्वोपद्रवशान्तिकृत् । योषितामपि बालानां धृतं जनमनोहरम् ॥ ५४ ॥ मालामंत्रमथो वक्ष्ये प्रणवो वाग्घरिप्रिया । दीर्घत्रयान्विता माया पूर्वोक्तं कूटपञ्चकम् ॥ ५५॥ तारो नमो हनुमते प्रकटान्ते पराक्रम । आक्रान्तदिङ्मंडलतो यशोवीति च तान च ॥५६॥ धवलीकृतवर्णाते जगत्रितयवज्र च । देह ज्वलदग्निसूर्यकोटचंते तु समप्रभ ॥ ५७ ॥ तनूरुह पदं रुद्रावतारपदमीरयेत् । लङ्कापुरीदहांतेनोदधिलंघनवर्णकाः ॥ ५८ ॥ दशग्रीवशिरःपश्चात्कृतान्तक

पदं ततः । सीताश्वासनवाय्वन्ते सुतशब्दमुदीरयेत्
॥ ५९॥ अञ्जनीगर्भसंभूत श्रीरामान्ते तु लक्ष्मणा ।
नंदकांतेरकपिचसैन्यप्राकारवर्णका: ॥६०॥ सुग्रीव
सख्यकावर्णा रणवालिनिबर्हण । कारणद्रोणपर्वांते
तोत्पाटनपदं वदेत् ॥ ६१ ॥ अशोकवनवीत्यंते
दारणाक्षकुमारक । छेदनांते वनपदं रक्षाकरसमूह
च ॥ ६२ ॥ विभञ्जनांतब्रह्मास्त्रब्रह्मशक्तिग्रसेति च ।
लक्ष्मणांते शक्तिभेदानिवारणपदं पुनः ॥६३॥ विश
ल्यौषधिवर्णांते समानयनवर्णका: । बालोदितांते

भान्वंत मण्डलग्रसनांत च॥६४॥मेघनादांत होमांते

विध्वंसनपदं वदेत् । इन्द्राजिद्वधकारांतेणसीतारक्षके
ति च ॥६५॥ राक्षसीसंघवर्णांते विदारणच कुंभ च ।
कर्णादिवधशब्दांते परायणपदं वदेत् ॥ ६६ ॥ श्री
रामभक्तिशब्दान्ते तत्परेति समुद्र च । व्योमद्रुमलं
घनेति महासामर्थ्यमेति च ॥ ६७ ॥ ह्नातेजःपुंजवी
त्यंते राजमानपदं पुनः । स्वामिवचनसंपादितार्जुनां
ते चसंयुग॥६८॥ सहायांते कुमारेति ब्रह्मचारिन्पदं
वदेत् । गंभीरशब्दोदयच दक्षिणाशापदं पुनः॥६९॥
मार्तंडमेरुशब्दांते पर्वतेति पदं वदेत्। पीठिकार्चनश
ब्दांते सकलेतिपदं पुनः ॥७०॥ मंत्रागमाचार्य मम

सर्वग्रहविनाशन । सर्वज्वरोच्चाटनेति सर्वविषविना
शन ॥ ७१ ॥ सर्वापत्तिनिवारणसर्वदुष्टेति संपठेत् ।
निबर्हणपदं सर्पव्याघ्रादिभयतत्परम् ॥ ७२ ॥
निवारणसर्वशत्रूच्छेदनेतिपदं मम । परस्य च त्रिभु
वनं पुंस्त्रीनपुंसकात्मकम् ॥ ७३ ॥ सर्वजीवपदं पश्चा
ज्जातं वशययुग्मकम् । ममाज्ञाकारकं पश्चात्संपाद
यपदद्वयम् ॥ ७४ ॥ नानानामपदं धेयान् सर्वान् राज्ञः
स संपठेत् । परिवारान्ममेत्यंते सेवकान्कुरुयुग्मकम्
॥ ७५ ॥ सर्वशस्त्रास्त्रवीत्यंतेषाणिविध्वंसयद्वयम् ।
मायादीर्घत्रयोपेताहात्रयं चेहियुग्मकम् ॥ ७६ ॥

विलोमपंचकूटानि सर्वशत्रून्हनद्वयम् । परदांतेलानिपरसैन्यानि क्षोभयद्वयम् ॥ ७७ ॥ मम सर्वकार्यं जातं साधयाद्वितयं ततः । सर्वदुष्टदुर्जनांते मुखानि कीलयद्वयम् ॥ ७८ ॥ घेत्रयं हात्रयं वर्मत्रितयं फट्त्रयं ततः । वह्निप्रियांतो मंत्रोऽयं मालासंज्ञोऽखिलेष्टदः ॥ ७९ ॥ अष्टाशीत्युत्तराः पंचशतवर्णा मनोः स्मृताः । महोपद्रवसंपत्तेः स्मृतोऽयं दुःखनाशनः ॥ ८० ॥ द्वादशार्णैस्त्विमान्वर्णान्षट्त्यक्त्वैकं तथादिमम् । पंचकूटात्मको मंत्रो निखिलाभीष्टसाधकः ॥८१॥ मुनी रामोऽथ गायत्रीछन्दो देवः कपीश्वरः ।

पञ्चबीजैः समस्तेन षडङ्गं मुनिभिः स्मृतम् ॥८२॥
रामदूतो लक्ष्मणांते प्राणदाताञ्जनीसुतः। सीताशो
कविनाशोऽथ लङ्काप्रासादभञ्जनः ॥ ८३ ॥ हनुम
दाद्याः पञ्चैते बीजाद्याङेसमन्विताः। षडङ्गमन्त्राः
संदिष्टा ध्यानपूजादिपूर्ववत् ॥८४॥ तारोवाक्कमला
मायादीर्घत्रयसमन्विताः। पञ्चकूटानि मंत्रोऽयं रुद्रा
णैऽभीष्टसिद्धिदः ॥ ८५ ॥ अर्चनापूर्ववच्चास्य परो
मंत्रोऽभिधीयते। हृदयं भगवान्ङेन्त आञ्जनेयमहाब
लौ ॥ ८६ ॥ तद्वद्वह्निप्रियांतोयं मनुरष्टादशाक्षरः।
मुनिरीश्वर एवास्यानुष्टुप्छन्दः समीरितम् ॥ ८७ ॥

हनुमान्देवताबीजं हुंशक्तिर्वह्निवल्लभा । आञ्जनेयोरु
द्रमूर्तिर्वायुपुत्रस्तथैव च ॥ ८८ ॥ अग्निगर्भो राम
दूतो ब्रह्मास्त्रविनिवारणः । एतैर्ङेन्तैः षडङ्गानि कृत्वा
ध्यायेत्कपीश्वरम् ॥ ८९ ॥ दहनतप्तसुवर्णसमप्रभं
भयहरं हृदये विहिताञ्जलिम् । श्रवणकुण्डलशोभि
मुखाम्बुजं नमत वानरराजमिहाद्भुतम् ॥ ९० ॥
अयुतं प्रजपन्मंत्रदशांशं जुहुयात्तिलैः । वैष्णवे पूजये
त्पीठे पूर्ववत्कपिनायकम् ॥ ९१ ॥ जितेन्द्रियो नक्त
भोजी प्रत्यहं साष्टकं शतम् । जपित्वा क्षुद्ररोगेभ्यो
मुच्यते दिवसत्रयात् ॥ ९२ ॥ भूतप्रेतपिशाचादि

नाशायैवं समाचरेत् । महारोगनिवृत्त्यै तु सहस्रं प्रत्यहं जपेत् ॥ ९३ ॥ यताशनोयुतं नित्यं जपन्ध्यायन्कपीश्वरम् । राक्षसौघं विनिघ्नन्तमचिराज्जयति ध्रुवम् ॥९४॥ सुग्रीवेण समं रामं संदधानं स्मरन्कपिम् । प्रजप्यायुतमेतस्य संधिं कुर्याद्विरुद्धयोः ॥ ९५ ॥ लङ्कां दहन्तं तं ध्यायन्नयुतं प्रजपेन्मनुम् । शत्रूणां प्रदहेद्ग्रामानचिरादेव साधकः ॥९६ ॥ प्रयाणसमये ध्यायन्हनूमन्तंमनुं जपन् । यो याति सोऽचिरात्स्वेष्टं साधयित्वा गृहंव्रजेत् ॥ ९७ ॥यः कपीशं सदा गेहे पूजयेज्जपतत्परः । आयुर्लक्ष्म्यौ प्रव

द्धैते तस्य नशन्त्युपद्रवाः ॥ ९८ ॥ शार्दूलतस्करा
दिभ्यो रक्षेन्मनुरयं स्मृतः । प्रस्वापकाले चौरेभ्यो
दुष्टस्वप्नादपि ध्रुवम् ॥९९॥ अघप्लीहादिरोगघ्नो हनु
मन्मंत्रकं ब्रुवे। पवनद्वितयं सद्योजातयुक्तं हनूपदम्
॥१००॥ महाकालशशाङ्काढ्यः कामिकाफलफक्कि
या। सनेत्राणांतमीनागसात्वतो ग्रित आयुरा। षलो
हितरुडाहेतिवदनेत्राक्षरोमनुः।१०१।प्लीहरोगहरश्चा
स्य मुन्याद्यं पूर्ववन्मतम्।प्लीहयुक्तोदरे स्थाप्य नाग
वल्लीदलं शुभम् ॥ १०२ ॥ तदुपर्य्यष्टगुणितं वस्त्रमा
च्छादयेत्ततः । वंशजं शकलं तस्योपरि मुञ्चेत्कापि

स्मरन् ॥ १०३ ॥ अरण्यप्रस्तरोत्पन्ने वह्नौ यष्टिं
प्रतापयेत् । बदरीतरुसंभूतां मंत्रेणानेन सप्तशः
॥१०४॥ तया संताडयेद्वंशशकलं जठरास्थितम् । सप्त
कृत्वः प्लीहरोगो नश्यत्येव नृणां क्षणात् ॥१०५॥
पुच्छाकारे सुवसने लेखिन्या कोकिलोत्थया । अष्ट
गंधैर्लिखेद्रूपं कपिराजस्य सुंदरम् ॥ १०६ ॥ तन्म
ध्येष्टादशार्णं तु शत्रुनामयुतं लिखेत् । तेन मंत्राभिज
प्तेन नरो बद्धेन भूमिपः ॥१०७॥ जयत्यरिगणं सर्वद
र्शनादेव निश्चितम् । युद्धं जिगीषुर्नृपतिः पूर्वोक्तं लेख
येद्ध्वजे ॥ १०८ ॥ ध्वजमादाय परागे संस्पर्शान्मो

क्षणावधि । मातृकां जापयेत्पश्चाद्दशांशेन च होम
येत् ॥ १०९ ॥ सर्षपैस्तिलसंमिश्रैः संस्पर्शान्मो
क्षणावधि । गजस्थं तं ध्वज दृष्ट्वा पलायंतेऽरयो
ऽचिरात् ॥ ११० ॥ अथ हनूमतो यंत्रं वक्ष्ये रक्षा
विधायकम् । लिखेदष्टदलं पद्मं साध्याख्यायुतकर्णि
कम् ॥ १११ ॥ दलेष्वष्टार्णमालिख्य मालामंत्रेण वे
ष्टयेत् । तद्बहिर्माययावेष्ट्य प्राणस्थापनमाचरेत्
॥११२॥लिखितं स्वर्णलेखिन्या दले भूर्जतरोः शुभे ।
रोचनाकुङ्कुमाभ्यां तु वेष्टितं कनकादिभिः ॥११३॥
संतापसाधितं यन्त्रं भुजे वा मूर्ध्नि धारयेत् । रणे जय

मवाप्नोति व्यवहारे दुरोदरे॥ ११४ ॥ ग्रहैर्विघ्नैर्विषैः
शस्त्रैश्चोरैर्नैवाभिभूयते। रोगान् सर्वानपाकृत्य चिरं
जीवति भाग्यवान् ॥ ११५ ॥ वियदाग्नेयुतं दीर्घष
ट्कांद्यं तारसंपुटम् । अष्टार्णो मन्त्र आख्यातो मा
लामन्त्रोऽथ कथ्यते ॥ ११६ ॥ वज्रकाय वज्रतुण्ड
कपिलेत्यथ पिङ्गल । ऊर्ध्वकेश महाबल तथा रक्तमु
खेति च ॥ ११७ ॥ तडिज्जिह्वमहारौद्रदंष्ट्रोत्कटक
हद्वयम् । करालिने महादृढप्रहारिन्निति वर्णकाः
॥ ११८ ॥ लङ्केश्वरवधायान्ते महासेतुपदं ततः ।

बन्धान्ते च महाशैलप्रवाहगगनेचर ॥ ११९॥ एह्ये

हि भगवन्नन्ते महाबलपराक्रम। भैरवाज्ञापयैह्योहिम हारौद्रपदे पुनः ॥ १२०॥ दीर्घपुच्छेन वर्णान्ते वेष्टयांते तु वैरिणम् । जम्भयद्वितयं हुंफट् प्रणवादिः समीरितः ॥१२१॥ बाणनेत्रेन्दुवर्णोऽयं मालामन्त्रोखिलेष्टदः । युद्धे जप्तो जयं दद्यादाधिव्याधिविनाशनः ॥ १२२ ॥ अष्टार्णमालामन्वोस्तु मुन्याद्यर्चा तु पूर्ववत् । भूरिणा किमिहोक्तेन सर्वं दद्यात्कपीश्वरः ॥ १२३ ॥ अथ हनुमन्मंत्रोद्धारः । उक्तं च रामार्चनचान्द्रिकायाम्–आंजनेयमनुं वक्ष्ये भुक्तिमुक्त्येकसाधनम् । प्रकाशितं शंकरेण लोकानां हि

तमिच्छता ॥ १२४ ॥ भूतप्रेतपिशाचादिडाकिनी ब्रह्मराक्षसाः । दृष्ट्वा च प्रपलायंते मंत्रानुष्ठानतत्परम् ॥ १२५ ॥ प्रधानश्चांगभूतोयं मन्त्रराजो ह्यनुत्तमः । पूर्वं नमः पदं चोक्त्वा ततो भगवते पदम् ॥१२६ ॥ आंजनेयपदं ज्ञेयं महाबलपदं तथा । वन्हिजायांत एवं स्यान्मंत्रो हनुमतः परम् ॥ १२७ ॥ सर्वसिद्धि करः प्रोक्तो मंत्रश्चाष्टादशाक्षरः।मालाख्योऽपरमंत्रो पि मारुतेः सर्वसिद्धिदः ॥१२८॥ प्रणवं पूर्वमुच्चार्य नमो हनुमते पदम् ॥ ङेऽन्तं प्रकटसंयुक्तं पराक्रम पदं तथा ॥ १२९ ॥ तथाक्रांतसर्वंसामिदिङ्मण्डल

मुदीर्य च । यशोवितानधवलीकृतजगत्त्रितयाय च ॥ १३० ॥ वज्रदेहेति चेत्युक्त्वा रुद्रावतारपदं तथा । संबुद्ध्यंतंपदं लंकापुरीदहनमीरयेत् ॥ १३१ ॥ उदधिलंघनं चापि दशग्रीवकृतांतकः । सीताश्वासनेतिपदमंजनीगर्भसंभव ॥ १३२ ॥ श्रीरामलक्ष्मणानन्दकारिन्कपिसैन्यप्राकार । सुग्रीवसाधारण पदं पर्वतोत्पाटनं तथा ॥१३३॥ बालब्रह्मचारिन्निति तथा गंभीरशब्द च । सर्वग्रहविनाशनसर्वज्वरोच्छेदनेति च ॥१३४॥ डाकिनीध्वंसनपद ततस्तारमुदीरयेत् । मायाहात्रयमुच्चाय भगवन्नेहिवदेत्ततः १३५

सर्वविषं हर परबलं क्षोभय च द्वयम्। ततश्च सर्वका
र्याणि साधयेतिद्विरुच्चरेत्। हुंफट्स्वाहेति मन्त्रोऽयं
मालाख्यः सर्वकामधुक्। ऋषिरीश्वर एव स्यादनु
ष्टुप्छन्द उच्यते ॥ १३६ ॥ हनुमान्देवता प्रोक्ता
हंबीजं शक्तिरंतजौं। कीलकं हात्रयं प्रोक्तं वदेकं तु
हसौं पुनः। हनुमत्प्रीणनं चैव फलमाद्यमुदीरितम्
॥ १३७॥ नमो भगवते चाञ्जनेयायाङ्गुष्ठयोर्न्यसेत्।
रुद्रमूर्तय इत्येव तर्जनीभ्यामनन्तरम् ॥ १३८ ॥ वा
युसुतायापि तथा मध्यमाभ्यामपि स्फुटम्। अग्नि
गर्भायेति तथाऽनामिकाभ्यां प्रविन्यसेत् ॥ १३९ ॥

रामदूताय च पुनः कनिष्ठिकाभ्यां विचक्षणः । ब्रह्मा स्त्रवारणायास्त्रमन्त्रश्चायं समीरितः ॥ १४० ॥ एवं षडङ्गं च मुनेः कृत्वा ध्यायेदनन्यधीः। स्फटिकाभं स्वर्णकांतिं द्विभुजं च कृताञ्जलिम् ॥ १४१ ॥ कुण्डलद्वयसंशोभिमुखाम्भोजंमुहुर्मुहुः । अयुतं(१००००) तु परश्चर्या रामस्याग्रे शिवस्य च ॥ १४२ ॥ पूजां तु वैष्णवे पीठे शैवे वापि विधीयते । आवृत्तिभिर्विना नित्यं नक्ताशी विजितेन्द्रियः ॥ १४३ ॥ क्षुद्ररोगनिवृत्त्यर्थमष्टोत्तरशतं मुने । जप्त्वा त्रिदिनमेकान्ते तेभ्यो मुच्येत तत्क्षणात् ॥ १४४ ॥ क्षुद्रं भूतप्र

शांत्यर्थमष्टोत्तरशतं मुनेः । जप्त्वैव तद्भयान्मुक्तो भवेदेवं न संशयः ॥ १४५ ॥ महारोगादिशान्त्यर्थमष्टोत्तरसहस्रकम् । जप्त्वा तस्मात्प्रमुच्येत निश्चितं नियताशनः ॥ १४६ ॥ जयाभिकांक्षिणां राज्ञामस्मादन्यन्न विद्यते । ध्यायेद्राक्षसहंतारमयुतं नियताशनः ॥१४७॥ जपन्नियतमाश्वेव जयेद्दुर्जयमप्यरिम् । सन्धानाय तु सुग्रीवसन्धातारं स्मरन्नपि ॥१४८॥ अयुतेनैव बलिना सन्धिमाप्नोत्यसंशयम् । लङ्कायां दाहकं ध्यायेज्जपन्नयुतमञ्जसा ॥ १४९ ॥

शत्रुराष्ट्रं [illegible] । जयार्थी रिपु

संघातं तस्मादन्यो न विद्यते ॥ १५० ॥ यस्तु गेहे हनूमन्तं सर्वदेवं प्रपूजयेत् । तं वन्दे तस्य मन्त्रेण तस्य लक्ष्मीरचंचला ॥ १५१ ॥ दीर्घमायुर्भवेदेव सर्वतो विजयी भवेत् । मायादिभूतसंक्षोभं तद्दर्शनैव जायते ॥ १५२ ॥ शत्रवः सर्वदा मित्राभावेनैव च ते सदा । शैवानां वैष्णवानां च षट्सु कर्मसु दर्शकः ॥ १५३ ॥ नान्यं साधनमस्त्येव मन्त्रादस्माद्धनूमतः । चोरव्याघ्रादिभीतानामयमेव परायणम् १५४॥ परापहृतराज्यानां धर्षितानां परैः पुनः । सन्नाहभाजां युद्धेषु रुद्धानां परसैनिकैः ॥ १५५॥ यात्राकाले

हनूमन्तं स्मरन्यस्तु स्वकाद्गृहात् । निर्गच्छति स वेगेन इष्टार्थमभिगच्छति ॥ १५६ ॥ स्वापकाले स्मरन्नित्यं चोरभूतादिकाञ्जयेत् । मद्वयं वासुदेवाद्यं हनूमन्तं पदं ततः॥ १५७॥ गच्छेति फलितपदं धगौत्विधगितेतिच । आपूरा स्वपुरा डाहेति सद्यः प्रत्ययकारकः ॥ १५८ ॥ चतुर्विंशत्यक्षरको मंत्रोऽयं प्लीहरोगहृत् । नागवल्लीदले चैवमष्टप्रगुणितं शुभम् ॥ १५९ ॥ वंशजं शकलं स्थाप्य क्रमात्प्लीहोदरोपरि । सप्तारण्योपलाग्निं वै दूरे धृत्वा प्रतापयेत् ॥ १६० ॥ मन्त्रेणानेनाभिमन्त्र्य सप्तवारं तथा पुनः । तथाभिम

न्त्रयेदेवं सप्ताभिस्तु विचक्षणः ॥ १६१ ॥ स्फोटद्वा
रं भवेत्प्लीहं भस्मीभूतं न संशयः । कर्पूराद्यष्टगंधे
न पुच्छाकारे पटे लिखेत् ॥ १६२ ॥ कोकिलाख्यस्य
लेखिन्या रूपं हनुमतो मनुम् । तदधोष्टादशार्णं तु
मन्त्रमध्येभिधामरैः ॥ १६३ ॥ मूर्न्धि बद्धेन तेनैव त्रै
लोक्यं जयति ध्रुवम् । यद्वा सेनाजयेच्छायां पता
कायां समालिखेत् ॥ १६४ ॥ चन्द्रसूर्यग्रहे जाप्यं
मातृकामोक्षणावधि । होमयेच्च दशांशेन तिलसर्षप
कादिभिः ॥ १६५ ॥ युद्धकाले पताकायां गजाश्वो
परि शोभितम् । दर्शयेत्परसैन्यस्य तद्भङ्गः स्यात्सु

निश्चितम् ॥१६६॥ मालामन्त्रं कर्पूरकस्तूरीकुंकुम केसर-गोरोचनसकिडी-अगरुदेवदारुचन्दनामित्यष्ट गन्धेन लिखेत् । मालामन्त्रं जपेद्यस्तु हनूमन्तं स्मरन्रणे । वज्राङ्गो जायते युद्धे हनूमत्समविक्रमः ॥ १६७ ॥ अथ रक्षां प्रवक्ष्यामि सर्वसिद्धिप्रदाय काम् । स्तंभनं सर्वसैन्यानां भूतानां च वशंकरम् ॥ १६८॥ रोचनाकुंकुमाभ्यां च भूर्जपत्र सुशोभने। सुवर्णमयलेखिन्या यन्त्रे मन्त्रदलं लिखेत् ॥१६९॥ साध्यनाम च तन्मध्ये मूलमन्त्रं दलाष्टके। माला मन्त्रं च तद्बाह्ये निधा ह्रींकारवेष्टितम् ॥ १७० ॥

वेष्टय यन्त्रं त्रिलोहेन कटिबाहुशिरःस्थितम् । धारयेद्य इमां रक्षां विघ्नस्तस्य न विद्यते ॥ १७१ ॥ रणे राजकुले द्यूते व्यवहारे पराभवे । शस्त्रं नाक्रमते वश्यं वज्रदेहो महाबलः ॥ १७२ ॥ उडुपादिकदोषांश्च विषं स्थावरजङ्गमम् । न भयं विद्यते तस्य स्त्रीणां चैवातिवल्लभः ॥ १७३ ॥ तस्य पीडां न कुर्वंति ग्रहाश्चैव ह्युपग्रहाः । जलवह्निभयं नास्ति नास्ति तस्करज तथा ॥ १७४ ॥ ज्वराः सर्वे विनश्यंति व्याहिकाद्या महाबलाः । अग्निजादिमहारोगा यन्त्रराजप्रभावतः ॥ १७५ ॥ तारं हकारोग्निसमः षड्दीर्घस्वर

बिन्दुमान् । प्रणवान्तोऽष्टाक्षरको मूलमन्त्र उदाह
तः ॥ १७६ ॥ ताराद्यं वज्रकायेति वज्रतुण्डेति ह्युद्ध
रेत् । कपिलः पिङ्गलः प्रोक्त्वा ऊर्ध्वकेश महाबल
॥ १७७ ॥ रक्तमुखतडिज्जिह्वमहारौद्रपदं ततः ।
दंष्ट्रोत्कटकटारावकरालास्य वदेत्ततः ॥ १७८ ॥ म
हादृढप्रहारिंश्च लंकेश्वरवधाय तु । महासेतुबन्धपदं
महाशैलप्रवाह च ॥ १७९ ॥ गगनेचर एह्येहि भग
वंश्च महापदम् । बलपराक्रमपदं हि भैरवाज्ञापयेति
च ॥ १८० ॥ एह्येहि महारौद्रदीर्घपुच्छेन वेष्टयाथ
च वैरिणाम् । [illegible] प्रोक्त्वा हं कृं हूं फडंत

कम् ॥ १८१ ॥ पञ्चविंशत्याऽभ्यधिकः प्रोक्तो मन्त्रः षडक्षरः । मालाख्योऽयं ज्वरादीनां रोगाणामन्तकः स्मृतः ॥ १८२ ॥ सर्वतन्त्रसंग्रहे मन्त्रः—ॐ हं हनुमते रुद्रात्मकाय हुंफट् ॥ १८३ ॥ नदीतीरे निर्जने ध्यानम् । महाशैलं समुत्पाट्य धावन्तं रावणं प्रति । तिष्ठतिष्ठ रणे दुष्टघोरनादं समुच्चरन् ॥ १८४ ॥ लाक्षारक्तारुणं रौद्रं कालान्तकयमोपमम् । ज्वलदग्निसमं नेत्रं सूर्यकोटिसमप्रभम् ॥ १८५ ॥ अङ्गदाद्यैर्महावीरैर्वेष्टितं रुद्ररूपिणम् । एवंरूपं हनूमन्तं ध्यात्वा यः प्रजपेन्मनुम् ॥ १८६ ॥ लक्षजापात्प्रसन्नः स्यात्सत्यं

ते कथितं मया । ध्यानैकमात्रतः पुंसां सिद्धिरेव न संशयः ॥१८७॥ प्रातः स्नात्वा नदीतीर उपविश्य कुशासने । प्राणायामं षडङ्गं च मूलेन सकलं चरेत् ॥१८८॥ पुष्पांजलयष्टकं दत्त्वा ध्यात्वा रामं ससीतकम् । ताम्रपात्रे ततः पद्ममष्टपत्रं सकेसरम् ।१८९। रक्तचंदनघृष्टेन लिखेत्तस्य शलाकया । कर्णिकायां लिखेन्मंत्रं तत्रावाह्य कपिं प्रभुम् ॥ १९० ॥ कर्णिकायां हनूमन्तं ध्यात्वा पाद्यादिकं ततः । गंधपुष्पादिकं चैव नैवेद्यं मूलमंत्रतः ॥१९१॥ सुग्रीवं लक्ष्मणं चैव अङ्गदं नलनीलकम् । जांबवन्तं च कुमुदं केश

रिणं दलेदले ॥ १९२ ॥ पूर्वादिक्रमतो देवान्पूजयेद्गन्धचन्दनैः । पवनं चांजनां चैव पूजयेद्दक्षवामतः ॥ १९३ ॥ दलाग्रेष्टकपिभ्योपि पुष्पांजल्यष्टकं ततः । ध्यात्वा जपेन्मंत्रराजं लक्षं यावत्तु साधकः ॥ १९४ ॥ लक्षान्तदिवसं प्राप्य कुर्याच्च पूजनं महत् । एकाग्रमनसा ध्यायेत्तस्मिन्पवननन्दनम् ॥ १९५ ॥ दिवा रात्रौ जपं कुर्याद्यावत्सन्दर्शनं भवेत् । सुदृढं साधकं मत्वा निशीथे पवनात्मजः ॥ १९६ ॥ सुप्रसन्नस्ततो भूत्वा प्रयाति साधकाग्रतः । यथेप्सितं वरं दत्त्वा साधकाय कपिः प्रभुः ॥ १९७ ॥ वरं लब्ध्वा साध

केन्द्रो विहरेदात्मनः सुखैः। एतद्धि साधनं पुण्यं देवानामपि दुर्लभम् ॥११८॥ तव स्नेहान्मयाख्यातं साधकाभीष्टसिद्धये ॥ अथ ध्वजवीरहनुमन्मंत्रः ॥ स्फुटग्रंथे–ॐ अस्य श्रीध्वजवीरहनुमन्मंत्रस्य ब्रह्माऋषिः। गायत्रीछंदः। ध्वजवीरब्रह्मादेवता। बंबीजम्। रंशक्तिः। धंकीलकम्। सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः ॥ अथ ऋष्यादिन्यासः–ब्रह्मऋषये नमः शिरसि। गायत्रीछंदसे नमः मुखे। ध्वजवीरब्रह्मदेवतायै नमः हृदये। बंबीजायनमः गुह्ये। रं शक्तये नमः पादयोः। धंकीलकायनमः नाभौ।

विनियोगाय नमः सर्वांगे ॥ अथ मंत्रन्यासः—ॐ आंअंगुष्ठाभ्यांनमः १ रींतर्जनीभ्यांनमः २ क्रोंम ध्यमाभ्यांनमः ३ टं अनामिकाभ्यां ४ ठंकनिष्ठि काभ्यांनमः ५ डंकरतलकरपृष्ठाभ्यांनमः ६ ढं हृद यायनमः ७ णं शिरसे स्वाहा ८ बं शिखायै वषट् ९ रं कवचाय हुं १० धं नेत्रत्रयायवौषट् ११ ध्वजवीराय नमः अस्त्राय फट १२ ॥ अथ ध्यानम्—ध्वजवीर महा वीर धनंजयजयप्रद । जयकर्त्ताघहर्त्ताच तस्मै रुद्राय तेनमः ॥ १९९ ॥ अथ मूलमंत्रः—ॐ आंरींक्रों टं ठं डं ढं णं बं रं धं ध्वजवीरायनमः ॥ लक्षं पुरश्चरणं दशांशं हवनादिकम् ॥ २०० ॥ इति ॥ अत्र मूलं मृग्यम् ॥

अथटीका॥ पूर्वोक्तप्रारंभादिश्लोकानां कठिनशब्दानामर्थः प्रतिपाद्यते। श्रीहनुमतो मंत्रान्वक्तुं प्रतिजानीते–अथेति ॥ १ ॥ मन्त्रमुद्धराति–इंद्रेति। वराहोहः इन्द्रस्वर औ बिंदुस्ताभ्यां युतः हौं ॥ हसफस्वरूपम् अग्नीरः ॥ २ ॥ एते झिंटीशबिंदुयुताः॥ एबिंदुयुताः तेन ह्स्फ्रें ॥ गदीखः। पांताग्निरुद्रेन्दुयुतः पांतः फः। अग्नीरः। रुद्र ए। इंदुबिंदुस्तैर्युतः ख्फ्रें ॥ ३ ॥ हस रामनुचंद्राढ्याः औबिंदुयुताः ह्स्फ्रौं॥हसखफराः शिवेन्द्राढ्याः एबिंदुयुताः तेन ह्स्ख्फ्रें ह्सौ मन्विदुगौ औबिन्दुयुतौ ह्सौ परंरूपषष्ठम् ॥ ४ ॥ ङेयुतोहनुमान् हनुमते हार्द नमः ॥ यथा– हौंह्स्फ्रेंख्फ्रें ह्स्रौंह्स्ख्फ्रें ह्सौं हनुमते नमः। अस्य हनुमन्मंत्रस्य रामचन्द्रऋषिः। जगतीछंदः। हनुमान्देवता। ह्सौं बीजम्।

ह्स्फ्रें शक्तिः । ममाभीष्टसिद्ध्यर्थे जपे विनियोगः ॥ ५ ॥
षष्ठं ह्सौमिति बीजम् । ह्स्फ्रेमिति शक्तिः ॥ ६ ॥ हौं हृत् ।
ह्स्फ्रोंशिरः । ख्फ्रेंशिखा इत्यादि । वर्णन्यासमाह—मूर्ध्नीति ।
एकैकं सर्वत्र० ॥७॥ पदन्यासमाह—षडिति । पदद्वंद्वंहनुमतेनम
इति ॥ ८ ॥ ध्यानमाह—बालेति । वातात्मजं हनूमंतम् ॥ ९ ॥
॥ १० ॥ दलेषु तदाह्वयान् हनुमन्नामानि ॥ ११ ॥ तानाह-
रामभक्ताय इत्यादि ॥ १२–१९ ॥ शस्त्राक्षतादयो वारत्रय
मंत्रितेन भस्मना मार्जिता आचिराच्छुष्यंतिनश्यंति २०–२४॥
देहचंदनं देहे धृतं यच्चंदनं तेन युतम् । भस्मांबु च मंत्रितं यस्मै
देयं स वश्यः स्यात् ॥ २५ ॥ ईशानेत्यादितद्गृहे चिरमित्यंत
एकः प्रयोगः । भूतांकुशतरोः करञ्जस्य । अरिष्टस्य ईशान

दिशि स्थितेन मूलेनांगुष्ठमितां हनुमत्प्रतिमां कृत्वा प्राणान्सं स्थाप्य सिंदूरैरभ्यर्च्य तद्गृहद्वारि निखन्यते तत्र सर्वोपद्रवनाश स्तद्वृद्धिश्च ॥ २६–३२ ॥ शिवावितं शिवेनापि रक्षितं शत्रु मेवं कुर्वन्हन्यात् । अर्द्धचंद्रेत्यादि रिपुमुद्धतामित्यंत एको मा रणप्रयोगः ॥ उन्मत्तो धत्तूरः । श्लेष्मातकश्चिक्कणफलोवृक्षः । अक्षो विभीतकस्तदुत्थसमिद्भिश्च हुतं चरेत् जुहुयात् । सप्त घस्रान् दिवसान् ॥३३–३९॥ पराधीनो बद्धो निगडात् शृंख लातो मुच्यते । विद्वेषणादीनि विद्वेषमारणोच्चाटनतत्कृतपल्लवं लिखन्नेवमेव कुर्यात् ॥ असुकं द्वेषय २ इतिद्वेष्ये । मारय २ इतिमारणे । इत्यादिपल्लवलेखनम् ॥ ४० ॥ ४१ ॥ कुबेराक्षः



सूक्ष्मकणास्तत्कक्षुपविशेषः । ( सागरगोटा इतिमहाराष्ट्र

सिद्धः)॥४२॥४३॥ यद्धान्यैर्होमस्तदार्तिः । राजीलवणयुतेन यत्पादरजसाहूयते स म्रियते॥४४-४६॥ यंत्रमाह-वलयेति । पुच्छाकारं वलयत्रयं विलिख्य मध्ये आमितिबीजेन वेष्टितं साध्यनाम लिखेत् तदुपर्यष्टदलेषु हुमिति ॥ ४७ ॥ ४८ ॥ बहिरेकं वलयं कृत्वोपरि चतुरस्रं कृत्वा तदग्राणि संवर्ध्य तत्र त्रिशूलानि कृत्वा त्रिशूलेषु क्रोमिति । वज्रेषु ह्सौमिति विलिख्य तन्मालामंत्रेण वक्ष्यमाणेन संवेष्ट्य तत्पुनर्वलयत्रयेण वेष्टयेत् ॥ ४९-५१ ॥ नाभिः कस्तूरी ॥ त्यक्ताश उपवासी ॥ ५२ ॥ ५४ ॥ मालामंत्रमाह-प्रणव इति । वाक् ऐं । हरिप्रिया श्रीं । मायादीर्घत्रयान्विता ह्रां ह्रीं ह्रूं पूर्वोक्तं मूलमंत्रस्थम् ॥ ५५-७७ ॥ अत्रिर्दः वायुर्यः स्वरूपमन्यत् ॥ ७८ ॥७९॥

चतुर्विंशतिश्लोकैर्निष्पन्नो मालामंत्रो यथा–ॐ नमो हनुमते प्रकटपराक्रम आक्रांतदिङ्मंडलयशोवितानधवलीकृतजगत्त्रितय वज्रदेहज्वलदग्निसूर्यकोटिसमप्रभतनूरुहरुद्रावतार लंकापुरीदहनोदधिलंघन दशग्रीवशिरःकृतांतक सीताश्वासन वायुसुतांजनीगर्भसंभूत श्रीरामलक्ष्मणानन्दकरकपिसैन्यप्राकार सुग्रीवसख्यकारण वालिनिबर्हणकारण द्रोणपर्वतोत्पाटनाशोकवनविदारणाक्षकुमारकच्छेदन वनरक्षाकरसमूहनिभंजन ब्रह्मास्त्रब्रह्मशक्तिग्रसन लक्ष्मणशक्तिभेदनिवारण विशल्यौषधिसमानयन बालोदितभानुमंडलग्रसन मेघनादहोमविध्वंसन इंद्रजिद्वधकारणसीतारक्षकराक्षसीसंघविदारणकुंभकर्णादिवधपरायण श्रीरामभक्तितत्परसमुद्रव्योमद्रुमलंघन महासामर्थ्य महातेजःपुंजवि

राजमानस्वामिवचनसंपादितार्जुनसंयुगसहायकुमारब्रह्मचारिन्
गंभीरशब्दोदयदक्षिणाशामार्तंडमेरुपर्वतपीठिकार्चन सकल
मंत्रागमाचार्यममसर्वग्रहविनाशन सर्वज्वरोच्चाटन सर्वविषविना
शनसर्वापत्तिनिवारण सर्वदुष्टनिबर्हण सर्वव्याघ्रादिभयनिवारण
सर्वशत्रुच्छेदन मम परस्य च त्रिभुवनपुंस्त्रीनपुंसकात्मकं सर्व
जीवजातं वशय २ ममाज्ञाकारकं संपादय २ नानानामधेया
न्सर्वान्राज्ञः सपरिवारान्ममसेवकान्कुरु २ सर्वशस्त्रास्त्रविषाणि
विध्वंसय २ हांह्रींह्रूंह्रां ३ एह्येहिह्रूसौंह्रूस्ख्फ्रेंह्रूसौंख्फ्रेंह्रूस्फ्रेंह्रौं
सर्वशत्रून्हन २ परदलानि परसैन्यानिक्षोभय २ ममसर्वकार्यं
जातं साधय २ सर्वदुष्टदुर्जनमुखानि कीलय २ घे ३ हा ३ हुं
३ फट् ३ स्वाहा ॥ मालामंत्रोयमष्टाशीत्यधिकपंचशत

वर्णः(५८८)॥८०॥ मंत्रांतरमाह—द्वादशेति। ह्स्फ्रेंख्फ्रेंह्स्त्रौं ह्स्फ्रेंह्स्त्रोमिति ॥ ८१ ॥ अस्य हनुमत्पंचकूटमंत्रस्य रामचन्द्र ऋषिः। गायत्रीछंदः कपीश्वरोदेवता। ममाभीष्टसिद्ध्यर्थे जपे विनियोगः ॥ ८२ ॥ षडंगमाह—रामदूतइत्ति। हनुमदाद्याश्चतु र्थ्यंता बीजपूर्वाः षडंगमंत्राः—यथा ह्स्फ्रेंहनुमते हृत्॥ख्फ्रेंराम भक्तायशिरः ह्स्त्रौंलक्ष्मणप्राणदात्रे शिखाइत्यादिपूर्ववत् द्वादश वर्णवत् ॥ ८३ ॥ ८४॥ मंत्रांतरमाह—तार इति। तार ॐ वाक् ऐं। कमला श्रीम्। मायादीर्घत्रयाद्या ह्रां ह्रीं ह्रूं पंचकूटानि च इदानीमुक्तानि रुद्रार्णं एकादशाक्षरः। मंत्रः ॐऐं श्रीं ह्रां ह्रीं ह्रूं ह्स्फ्रें ख्फ्रें ह्स्त्रौं ह्स्ख्फ्रें ह्स्त्रौं॥८५॥ मंत्रांतरमाह—हृदयमिति। तद्वत्। ङेंतानमोभगवते आंजनेयायमहाबलाय स्वाहेति॥८६॥

॥८७॥ षडंगमाह—आंजनेय इति । आंजनेयाय हृत् रुद्रमूर्त्तये शिर इत्यादि ॥८८॥८९॥ ध्यानमाह—दहनेति ॥ ९० ॥९१ ॥ प्रयोगानाह—जितेंद्रिय इति ॥ ९२–९९ ॥ उदररोगनाशकमं त्रमाह—पवनेति । सद्योजातओंकारस्तद्युतं पवनद्वयं यो यो हनु स्वरूपं शशाङ्काढ्यो महाकालः सबिंदुर्मः मंकामिकातः फल फलस्वरूपम् । सनेत्राक्रियाइयुतोलःलि । णांतस्तः । मीनोधः । गस्वरूपम् । सात्वतोधः । गितआयुराषस्वरूपम् । लोहितंषः रूढाहस्वरूपम् । वेदनेत्राक्षरः चतुर्विंशत्यर्णः । यथा यो यो हनुमंतफलफालितधगधागितआयुराषरूडाहेति॥१००॥१०१॥ प्लीहरोगः उदररोगः । तन्नाशकप्रयोगमाह—प्लीहेति । आरण्य गोमयकरीषोत्पन्नेऽग्नौ नदयुंतथांयाष्टिसमधामलमंत्रेणतापयेत ।

तयोदरास्थितेवंशखण्डे ताडितेरोगोनश्यति ॥ १०२-१०८॥
प्रयोगांतरमाह-पुच्छेति । पुच्छाकारे वस्त्रे कोकिलापिच्छले
खिन्याष्टगंधैर्हनुमद्रूपं कृत्वा तदुदरेऽष्टादशार्णं विलिख्याधिमं
त्रितेन शिरोबद्धेन नतेनारीज्ञयति ॥ १०६-११० ॥ यंत्र
माह-लिखेदिति । अष्टार्णमालामन्त्रौ वक्ष्यमाणौ । दुरोदरे
द्यूते ॥ १११-११८ ॥ अष्टार्णमाह-वियादिति । वियतहः
अग्नीरः। यथा-ओं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ओंइत्यष्टार्णः ॥११६॥
मालामंत्रमाह-वज्रेति । यथा-ओंवज्रकाय वज्रतुंड कपिलपिंग
लऊर्ध्वकेश महाबल रक्तमुख तडिज्जिह्व महारौद्रदंष्ट्रोत्कटक
हहकरालिने महादृढप्रहारिन् लङ्केश्वरवधाय महासेतुबन्धमहा
शैलप्रवाहगगनेचर एह्येहि भगवन् महाबल पराक्रम भैरवाज्ञा

पय एह्येहि महारौद्र दीर्घपुच्छेन वेष्टय वैरिणं भञ्जय २ हुंफट्
॥ ११७-१२१ ॥ बाणनेत्रेन्दुवर्णः पंचविंशत्युत्तरशतार्णः ।
अष्टार्णमालामंत्रौ स्वतंत्राविति सूचयन्नाह-अष्टार्णेति ॥ १२२-
१२५ ॥ पूर्वमित्यादिमंत्रस्योद्धारश्चायं मंत्रः । पूर्वं षडशी
तितमे श्लोके प्रतिपादितः ॥ १२६-१२८ ॥ मंत्रांतरमाह-
प्रणवमिति । प्रकटपराक्रमायेतिङेंतंचतुर्थ्यंतम् ॥ १२९ ॥
॥ १३० ॥ वज्रदेहेत्यादि । अग्रे संबुद्ध्यंतपदानि उच्चारणीया
नि ॥ १३१-१३४ ॥ मायात्रयं ह्रांह्रींह्रूं ॥ १३५ ॥ हरहर
क्षोभयक्षोभयसाधयसाधय ॥ १३६-१३७ ॥ करषडंगन्यास
माह-नमइत्यादित्रिभिः ॥ १३८-१४० ॥ ध्यानमाह-स्फटि
काभमिति ॥ १४१ ॥ विधिमाह--अयुतमिति ॥ १४२-१४३ ॥

प्रयोगानाह–क्षुद्रेत्यादिना ॥ १४४–१५६ ॥ मंत्रांतर माह–मद्वयामिति ॥ १५७ ॥ १५८ ॥ मंत्रप्रयोगाः ॥ १५९–१६७॥ अथसैन्यादीनां रक्षाप्रयोगः–अथेत्यादिना ॥ १६८–१७५ ॥ अष्टाक्षरमंत्रोद्धारमाह–तारमिति । ॐ ह्रांह्रींहूं ह्रैं ह्रौं ह्रः ॐ अयंमंत्रप्रकाशःपूर्वोक्त एव ॥ १७६ ॥ अथ मालामंत्रोद्धारमाह–ताराद्यामिति । अयमपि मंत्रः सप्तदशा धिकशततमश्लोकमारभ्य प्रतिपादितः स्पष्ट एव ॥ १७७–१८२ ॥ अथमंत्रांतरमाह ॥ १८३–१९८ ॥ अथ ध्वज वीरहनुमन्मंत्राराधनविधानम् ॥ स्पष्टार्थः ॥ ध्वजवीरोनाम कुरुपांडवयुद्धप्रसंगे अर्जुनरथध्वजे स्थित इति । अत्र मूलं मृग्यम् । कस्मिंस्तंत्र उक्तं तन्नज्ञायते ॥ १९९ ॥ २०० ॥ इति श्लोकानां व्याख्या ॥

अथपंचमुखीध्यानम्--ध्यायेद्वानरनारसिंहखगराट्क्रोडाश्ववक्त्रं स्फुटं पद्माक्षीस्फुटपंचवक्त्ररुचिरं बालार्ककोटिद्युतिम् । हस्ते शूलकपालमुद्गरवरं कौमोदकीभूरुहं खट्वांगाङ्कुशपाशपर्वतधरं पीताम्बरं वानरम् ॥२०१॥ इति श्रीहरिकृष्णविनिर्मितेबृ० ध० उपासनास्तबकेहनुमदुपासनाध्याये हनुमन्मंत्रपटलनिरूपणंनामत्रयोदशप्रकरणम् ॥१३॥ श्लोकाः ।९७।

अथ हनुमत्पूजापद्धतिः ॥ ब्राह्मे मुहूर्त्ते शयनतलादुत्थाय करचरणौ प्रक्षाल्य निजासने समुपविश्यनिजशिरसि श्वेतवर्णसहस्रदलां कमलकर्णिकां तदन्त

गतचंद्रमंडलोपरिस्वगुरुं शुक्लवर्णं शुक्लालंकारभूषितं
ज्ञानानंदमुदितमानसं सच्चिदानंदविग्रहं चतुर्भुजं ज्ञा
नमुद्रापुस्तकवरदाभयकरं त्रिनयनं प्रसन्नवदनेक्षणं
सर्वदेवं परमशिवस्वरूपं ध्यात्वा तच्चरणयुगलकम
लविगलदमृतधारयास्वात्मानं प्लुतं विभाव्य मान
सोपचारैः संपूज्य दण्डप्रणामं मनसाकुर्यात् । तत्र
प्रणाममंत्रः—नमामि सद्गुरुं शांतं प्रत्यक्षं शिवरूपि
णम् । शिरसा योगपीठस्थं मुक्तिकामार्थसिद्धये॥ १ ॥
इति गुरुं प्रणम्य सुप्रसन्नं विभाव्य मनसा तदाज्ञां
गृहीत्वा अजपाजपसंकल्पं कृत्वा हंसः पंचविंशति

वारं जप्त्वा गुरूपदिष्टमार्गेण नादानुसंधानपूर्वकं निरस्तसमस्तोपाधिना केनापि चिद्विलासेन प्रवर्त्तमानोस्मीति विभाव्य स्वकार्यानुष्ठानाय—समुद्रमेखले देवि पर्वतस्तनमंडले। विष्णुपत्निन मस्तुभ्यं पाद स्पर्शं क्षमस्व मे ॥१॥ इति भूमिं प्रार्थ्य श्वासानुसारेण तस्यां पादं निधाय नद्यादौ गत्वा वैदिकं स्नानं निर्वर्त्य तान्त्रिकं प्रारभेत॥ तत्रादौ मूलम् । आत्मतत्त्वायस्वाहा १ मूलं विद्यातत्त्वाय स्वाहा २ मूलंशिवतत्त्वायस्वाहा ३॥ अथवा ॐ ह्रीं स्वाहा इत्याचम्य मूलं स्मरन् मलापकर्षस्नानं विधाय पुनराचम्य

देशकालौ संकीर्त्य श्रीमद्धनुमद्देवताप्रीतये तांत्रिकविधिनास्नानमहं करिष्ये ॥ जले त्रिकोणं कृत्वा सूर्यमंडलाद्गंगादितीर्थान्यावाह्य आचम्य स्वात्मानं प्रोक्ष्य मूलेन मृत्तिकया स्नपनं विधाय मूलं पठन् कुंभमुद्रया स्वदेवतां त्रिभिराभिषिच्य श्रवणादिसप्तच्छिद्राणि निरुध्य त्रिर्निमज्ज्योन्मज्जेत् ॥ इति स्नानविधिः ॥ अथसंध्या ॥ वैदिकीं कृत्वा तांत्रिकीं यथा–पूर्ववदाचम्य स्वमूलेन प्राणायामः ऋष्यादिकरषडंगन्यासौ विधाय पूर्ववत्तीर्थमावाह्य वामहस्ते तज्जलं निधाय दक्षहस्तेनाच्छाद्य लंवंरंयंहं

इति त्रिरभिमंत्र्य मूलमुच्चरंस्तत्त्वमुद्रया मूर्ध्नि सप्तधा मूलेन च त्रिधाभ्युक्ष्य शेषजलं दक्षहस्ते समाधाय तेजोरूपं ध्यात्वा इडया देहांतः पापं प्रक्षाल्य कृष्ण वर्णं तज्जलं पापरूपं पिंगलया विरेच्य पुरः कल्पि तवज्राशिलायां फडितिनिक्षिपेत् ॥ ततोऽर्घ्यं विधाय ॐ ह्रांह्रींहंसः श्रीमार्तंडभैरवाय प्रकाशशक्तिसहि ताय इदमर्घ्यं परिकल्पयामि स्वाहा ॥ इति त्रिरर्घ्यं कुलसूर्यायदत्त्वा हृत्पद्मात्सूर्यमंडले हनुमद्देवतां नी त्वा तत्र विधिवद्ध्यात्वा ॐ अंजनीजाय विद्महे वा युपुत्राय धीमहि तन्नःकपिः प्रचोदयात् ॥ इति मू

लगायत्री अनया चतसृषु सन्ध्यासु सूर्यमण्डल हनु
मद्देवतायै अर्घ्यं दत्त्वा यथाशक्ति जपेत् ॥ यथाश
क्ति स्वस्वगायत्रीं जप्त्वा पुनर्मूलगायत्रीं च जप्त्वा
मूलमंत्रं च जपित्वा प्राणायामादिना जपं समर्प्य
मंडलेभ्यो हनुमत्तेजःस्वस्वस्थाने हनुमन्तं च हृदि
आनीय ध्यायेत् ॥ इतिसंध्याविधिः ॥ अथ तर्प
णम् ॥ पूर्ववदाचम्य प्राणायामादि कृत्वा तीर्थं
मावाह्य मूलेन जलं सप्तधाऽमृतमुद्रयाऽमृतीकृत्य
तत्र जले यंत्रं ध्यात्वा तत्र देवतां हृदयात्सपरिवा
रामानीय षडङ्गयोगेन सकलीकृत्य कुण्डलिन्याः

प्रयोगेणामृतेनाभिषिच्य विधिवत्प्रपूज्य ऐशान्यां ऐंश्रींश्रीं अमुकानन्दनाथ भैरवस्तृप्यताम् इति त्रिः संतर्प्य वह्नौ परमगुरुश्रीपादुकां तर्पयामि । नैर्ऋत्यां परमाचार्यगुरुश्रीपादुकां तर्पयामि । वायव्ये परमेष्ठिगुरुश्रीपादुकां तर्पयामि । इति त्रिः सकृद्वा संतर्प्य दिव्यसिद्धमानवौघानपि गुरून् संतर्प्य जले यंत्रं विभाव्य मूलेन श्रीहनुमद्देवतातृप्यतामिति त्रिः संतर्प्य रामभक्तं तर्पयामि । महातेजसंत० कपिराजंत० महाबलंत० द्रोणाद्रिहारकंत० मेरुपीठिकार्चनकारकंतर्प० दक्षिणाशाभास्करंतर्प०

सर्वविघ्ननिवारकंत॰ सुग्रीवं त॰ अंगदं त॰नलिं त॰
जांबवन्तंत॰ नलं त॰ सुषेणं त॰ द्विविदं त॰मैन्दं त॰
इन्द्रं त॰ अग्निंत॰यमं त॰नैर्ऋतिं त॰वरुणं त॰वायुं
त॰कुबेरंत॰ ईशानंत॰ब्रह्माणंत॰ अनंतंत॰इति संत
र्प्य प्राणायामादि विधाय देवं स्वहृदि विसृजेदिति
तीर्थं च विसृजेत्स्वस्थाने ॥ इति तर्पणम् ॥ ततो
गृहमागत्य जलादिना द्वारदेवताः पूजयेत् । ॐ
धां धात्र्यै नमः विं विधात्र्यै नमः दक्षिणभागे । ॐ
गंगंगायै नमः यंयमुनायै नमःवामभागे । द्वारश्रियै
नमः देहल्यै नमः ऊर्ध्वे । वास्तुपुरुषायनमः अधः

इति संपूज्य वीराद्यासनेनोपविश्य । पृथ्वि त्वया धृ
ता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि
पवित्रं कुरु चासनम् ॥ १॥ इति पृथिवीं संप्रार्थ्य॥ अप
सर्पन्तु ते भूता ये भूता भुवि संस्थिताः। ये भूता विघ्न
कर्त्तारस्ते नश्यंतु शिवाज्ञया ॥२॥ इति तर्जनीमध्य
माभ्यामूर्ध्वोर्ध्वतालत्रयदानेन वामपार्ष्णिघातत्रयेण
दिव्यदृष्ट्या च त्रिविधान्विघ्नानुत्सार्य छोटिकाभि
र्दशदिग्बंधं कृत्वा चतुर्दिक्षु वह्निप्राकारं संचिंत्य प्राणा
यामं कुर्यात् । अथ भूतशुद्धिप्राणप्रतिष्ठांतमातृ
कान्यासबहिर्मातृकान्यासान् कृत्वा अथ प्रधानदेव

तान्न्यासान्कुर्यात् । तत्रादौ ऋष्यादिन्यासः—श्रीरा
मचंद्रऋषये नमःशिरसि। जगतीछंदसे नमःमुखे।
हनुमद्देवतायै नमः हृदये । ह्स्रौं बीजाय नमः गु
ह्ये। ह्स्फ्रें शक्तये नमः पादयोः। विनियोगाय नमः
सर्वांगे ॥ अथ वर्णन्यासः—ॐ ह्रौं नमः मूर्ध्नि १
ॐ ह्स्फ्रेंनमः भाले २ ॐ ख्फ्रें नमः नेत्रयोः ३ ॐ
हस्रौं नमः मुखे ४ ॐ स्फ्रेंनमः कंठे ५ ॐ ह्स्रौं नमः
बाह्वोः ६ ॐ हं नमः हृदये ७ ॐ नुंनमः कुक्षौ ८
ॐ मंनमः नाभौ९ ॐ तेंनमः लिंगे १० ॐ नंनमः
जानुद्वये ११ ॐ मः नमः पादयोः१२ अथ पदन्या

सः ॥ ॐ ह्रौं मूर्ध्नि १ ॐ स्फ्रें भाले २ ॐ ख्फ्रें मुखे ३ ॐ ह्सौं हृदि ४ ॐ ह्स्फ्रें नाभौ ६ ॐ ह्स्रौं ऊर्वोः ६ ॐ हनुमते जंघयोः ७ ॐ नमः पादयोः ८ ॥ अथ गायत्रीमंत्रन्यासः—ॐ अंजनीजाय अंगुष्ठाभ्यां नमः १ ॐ विद्महे तर्जनीभ्यां नमः २ ॐ वायुपुत्राय मध्यमाभ्यां नमः ३ ॐ धीमहि अनामिकाभ्यां नमः ४ ॐ तन्नः कपिः कनिष्ठिकाभ्यां नमः ५ ॐ प्रचोदयात् करतलकरपृष्ठाभ्यां नमः ६ ॥ अथ हृदयादिन्यासः—ॐ अंजनीजायहृदयायनमः १ ॐ विद्महे शिरसे स्वाहा २ ॐ वायुपुत्राय शिखायै वषट् ३

ॐ धीमहिकवचायहुं ४ ॐ तन्नः कपिः नेत्रत्रया
य वौषट् ५ ॐ प्रचोदयात् अस्त्राय फट् ६ ॥ अथां
गुलिन्यासः—ॐ ह्रां अञ्जनीसुताय अंगुष्ठाभ्यां नमः
१ ॐ ह्रीं रुद्रमूर्तये तर्जनीभ्यां नमः २ ॐ ह्रूंरामदू
ताय मध्यमाभ्यां नमः ३ ॐ ह्रैं वायुपुत्राय अना
मिकाभ्यां नमः ४ ॐ ह्रौंअग्निगर्भाय कनिष्ठिका
भ्यां नमः ५ ॐ ह्रः ब्रह्मास्त्रनिवारणाय करतलकर
पृष्ठाभ्यां नमः ६ ॥ अथ हृदयाद्यङ्गन्यासः—ॐ ह्रां
अञ्जनीसुताय हृदयाय नमः १ ॐ ह्रीं रुद्रमूर्त्तये
शिरसे स्वाहा २ ॐ ह्रुं रामदूताय शिखायै वषट् ३

ॐ ह्नैं वायुपुत्राय कवचाय हुं ४ ॐ ह्नौंअग्निगर्भाय नेत्रत्रयाय वौषट् ५ ॐ ह्नः ब्रह्मास्त्रनिवारणाय अस्त्राय फट् ६ । अथ प्रकारांतरेण करन्यासः—ॐ ऐं ह्रीं हनुमते रामदूताय अंगुष्ठाभ्यां नमः १ ॐ लंकाविध्वंसनाय तर्जनीभ्यां नमः २ ॐ अञ्जनीगर्भसंभूताय मध्यमाभ्यां नमः ३ ॐ शाकिनीडाकिनीविध्वंसनाय अनामिकाभ्यां नमः ४ ॐ किलकिलबुभुक्कारेण बिभीषणाय हनुमद्देवाय कनिष्ठिकाभ्यांनमः ५ ॐ ह्रींश्रींह्नौंह्नां फट् स्वाहा करतलकरपृष्ठाभ्यां नमः ६ । अथहृदयादिन्यासः—ॐ ऐंह्रींहनुमते रा

मद्भूताय हृदयाय नमः १ ॐ लंकाविध्वंसनाय शिरसे स्वाहा २ ॐ अञ्जनीगर्भसंभूताय शिखायै वषट् ३ ॐ शाकिनीडाकिनीविध्वंसनाय कवचाय हुं ४ ॐ किलकिलबुभुक्कारेण विभीषणाय हनुमद्देवाय नेत्रत्रयाय वौषट् ५ ॐ ह्रीं श्रीं ह्रौं ह्रांफट्स्वाहा अस्त्रायफट् ६ ॥ अथ पञ्चाशद्वर्णमातृकान्यासः।
ॐ ह्रीं हनुमते अं नमः शिरसि १ ॐ ह्रीं हनुमते आं नमः मुखवृत्ते २ ॐ ह्रीं हनुमते इं नमः दक्षनेत्रे ३ ॐ ह्रीं हनुमते ईंनमः वामनेत्रे ४ ॐ ह्रीं हनुमते उंनमः दक्षकर्णे ५ ॐ ह्रीं हनुमते ऊंनमः वाम

कर्णे ६ ॐ ह्रीं हनुमते ऋं नमः दक्षनासे ७ ॐ ह्रीं हनुमते ॠं नमः वामनासे ८ ॐ ह्रीं हनुमते ऌं नमः दक्षगंडे ९ ॐ ह्रीं हनुमते ॡं नमः वामगंडे १० ॐ ह्रीं हनुमते एं नमः ऊर्ध्वोष्ठे ११ ॐ ह्रीं हनुमते ऐं नमः अधरोष्ठे १२ ॐ ह्रींहनुमते ओं नमः ऊर्ध्वदंतपंक्तौ १३ ॐ ह्रीं हनुमते औं नमः अधोदंतपंक्तौ १४ ॐ ह्रीं हनुमते अंनमः मूर्ध्नि १५ ॐ ह्रीं हनुमते अः नमः अस्थिन १६ ॐ ह्रींहनुमते कं नमः दक्षबाहुमूले १७ ॐ ह्रींहनुमते खं नमः कूर्परे १८ॐ ह्रीं हनुमते गं नमः मणिबन्धे १९ ॐ ह्रीं हनुमते घं

नमः दक्षहस्ताङ्गुलिमूले २० ॐ ह्रीं हनुमते डं नमः
दक्षहस्तांग्रुल्यग्रे २१ ॐ ह्रीं हनुमते चं नमः वाम
बाहुमूले २२ ॐ ह्रीं हनुमते छं नमः कूर्प्परे २३ॐ
ह्रीं हनुमते जं नमः मणिबन्धे २४ ॐ ह्रीं हनुमते झं
नमः वामहस्तांग्रुलिमूले २५ ॐ ह्रीं हनुमते ञं नमः
वामहस्तांग्रुल्यग्रे २६ ॐह्रीं हनुमते टं नमः दक्षपा
दमूले २७ ॐ ह्रीं हनुमते ठं नमः जानुनि २८ ॐ
ह्रीं हनुमते डं नमः गुल्फे २९ ॐह्रीं हनुमते ढं नमः
दक्षपादांग्रुलिमूले ३० ॐ ह्रीं हनुमते णं नमः दक्ष
पादांग्रुल्यग्रे ३१ ॐ ह्रीं हनुमते तं नमः वामपादमू

ले ३२ ॐ ह्रीं हनुमते थं नमः जानुनि ३३ ॐ ह्रीं हनुमते दं नमः गुल्फे ३४ ॐ ह्रीं हनुमते धं नमः वामपादाङ्गुलिमूले ३५ ॐ ह्रीं हनुमते नं नमः वाम पादांगुल्यग्रे ३६ ॐ ह्रीं हनुमते पंनमः दक्षपार्श्वे३७ ॐ ह्रीं हनुमते फं नमः वामपार्श्वे ४८ ॐ ह्रीं हनुमते बं नमः पृष्ठे ३९ ॐ ह्रीं हनुमते भं नमः नाभौ ४० ॐ ह्रीं हनुमते मं नमः उदरे ४१ ॐ ह्रीं हनुमते यं त्वगात्मने नमः वामांसे ४२ ॐ ह्रीं हनुमते रं असृगात्मने नमः दक्षांसे ४३ ॐ ह्रीं हनुमते लं मांसात्मने नमः ककुदि ४४ ॐ ह्रीं हनुमते वं मेद

आत्मने नमः हृदादिदक्षकरांतम् ४५ ॐ ह्रीं हनुमते शं अस्थ्यात्मने नमः हृदादिवामकरान्तम् ४६ ॐ ह्रीं हनुमते षं मज्जात्मने नमः हृदादिदक्षपादांतम् ४७ ॐ ह्रीं हनुमते स शुक्रात्मने नमः हृदादि वामपादांतम् ४८ ॐ ह्रीं हनुमते हं प्राणात्मने नमः दक्षपादादिहृदयान्तम् ४९ ॐ ह्रीं हनुमते लं जीवात्मने नमः वामपादादिहृदयान्तम् ५० ॐ ह्रीं हनुमते क्षं परमात्मने नमः हृदादिमूर्धान्तम् ॥ ५१ ॥ इतिविन्यस्य। अथांतर्यजनम्। मूलाधारे मूलविद्यां विद्युत्कोटिसमप्रभाम् । सूर्यकोटिप्रतीकाशां चन्द्र

कोटिप्रभां प्रिये ॥ १ ॥ बिसतन्तुस्वरूपां तां बिन्दु
त्रिवलयां प्रिये । ऊर्ध्वशक्तिनिपातेन सहजेन वरा
नने ॥ २ ॥ मूलशक्तिदृढत्वेन मध्यशक्तिप्रबोधतः ।
परमानन्दसंदोहमानन्दं चिन्तयेत्परम् ॥ ३ ॥ इत्य
न्तर्यजनं कृत्वा पीठपूजां कुर्यात् । मूलाधारे आ
धारशक्तये नमः । प्रकृत्यै नमः तत्रागाधसर्वतोमु
खसुधाब्धिभ्यां नमः । तत्र कस्मैचित्कमठाय नमः ।
तदुपरि सहस्रफणिफणामण्डितमणिप्रकाशिताशेष
लोकशेषाय नमः । तलाय नमः । वितलायनमः ।
सुतलाय नमः । रसातलाय नमः । तलातलाय नमः ।

महातलाय नमः । पातालाय नमः । अष्टदिग्गजेभ्यो नमः । तदुपरि भूमण्डलाय नमः । सुधांबुधये नमः मणिद्वीपाय नमः । मेरवे नमः । मेरोर्दक्षिणादिग्भागे कस्मैचिद्रत्नसानवे नमः । तन्मध्ये सुरतरवे नमः । तन्मूले चिन्तामणिगृहाय नमः । तन्मध्ये रत्नवेदिकायै नमः । वेद्यां पूर्वभागे नवरत्नखचितनूतनमणिपीठाय नमः । एवं पीठं भावयित्वा तत्रैव हृदये स्वाभेदेन श्रीहनुमन्तं ध्यायेत् ।
ध्यायेद्बालदिवाकरद्युतिनिभं देवारिदर्पापहं देवेन्द्रप्रमुखैः प्रशस्तयशसं देदीप्यमानं रुचा । सुग्रीवादिस

मस्तवानरयुतं सुव्यक्ततत्त्वप्रियं संरक्तारुणलोचनं पवनजं पीतांबरालंकृतम् ॥ १ ॥ इतिध्यात्वा स्वपुरतो बिंदुत्रिकोणषट्कोणचतुरस्राणि मंडलानि पंक्तिद्वयेनैकेन वा दशसंख्याकानि कृत्वा तत्राधाराणि संस्थाप्य। तत्र प्रथममंडलाधारे शंखपात्रं कलशं वा संस्थाप्य गंगेत्यादिना तीर्थजलं संपूर्य गंधाक्षतपुष्पाणि प्रणवेन निक्षिप्य हनुमद्गायत्रीमंत्रेण संपूज्य धेनुमुद्रां प्रदर्श्य वह्निसूर्यसोमकलाभिः पूजयेत् । रं वह्निमंडलाय दशकलात्मने नमः । अं अर्कमंडलाय द्वादशकलात्मने नमः । सं सोममंड

लाय षोडशकलात्मने नमः इति संपूज्य । ततो द्वि
तीयादिमंडलाधारेषु पाद्यपात्रमर्घ्यपात्रं मधुपर्कपा
त्रमाचनपात्रं गंधपात्रं पुष्पपात्रमक्षतपात्रं नैवेद्य पात्रं
मुखवासपात्रं संस्थाप्य तेषु पात्रेषु स्वस्वपदार्थान्सं
स्थाप्य धूपपात्रं घृततैलदीपं वामे तैलदीपं दक्षे घृतदी
पं त्रिकोणषट्कोणयंत्रोपरि संस्थाप्य पुरतः शंखं घ
ण्टां च संस्थाप्य संपूज्य । अथ पाद्यपात्रमादाय
मूलमुच्चरन् श्रीहनुमद्देवतायै नमःपाद्यं समर्पयामि ।
एवं मूलेनार्घ्यं मूलेन मधुपर्कं मूलेनाचमनीयं मूलेन
शंखोदकेन घंटानादपुरःसरेण स्नानमभिषेकं च कु

त्वा शुद्धदुकूलवस्त्रेणाङ्गं प्रोञ्च्छ्य विचित्रपटवस्त्र
कुंकुमकेसरकस्तूरीचंदन सिन्दूर-मुकुटकुण्डलहारनू
पुरादिनानालंकारान्मूलेन दत्त्वा पुनराचमनीयं द
त्त्वा ततो मध्यमानामांगुष्ठाग्रैर्गंधोनमः इतिगंधम् ।
अंगुष्ठतर्जनीभ्यां पुष्पाणिवौषट् इति पुष्पैःसंपूज्य ।
अथ यंत्रकेसरेष्वंगपूजा ॥ हनुमते नमः पादौ पूज
यामि । सुग्रीवसखाय० गुल्फौ० । अंगदमित्राय०
जंघे० । रामदासाय० ऊरू० । अक्षघ्नाय० कटिं० ।
लङ्कादहनाय० वालधिं० । राममणिदाय० नाभिं० ।
सागरोल्लंघनाय० मध्यमं० । लङ्कामर्दनाय० केशा

वालिं०। संजीवनाहर्त्रे० स्तनौ०। सौमित्रिप्राणदाय० वक्षः०। कुंठितदशकंठाय० कण्ठं० रामाभिषेककारिणे० हस्तौ०। मंत्ररचितरामायणाय० वक्रं। प्रसन्नवदनाय० वदनं। पिङ्गनेत्राय० नेत्रे०। श्रुतिपारगाय० श्रुतिम्। ऊर्ध्वपुण्ड्रधारिणे० कपोलं०। मणिकण्ठमालिने० शिरः०। सर्वाभीष्टप्रदाय० सर्वाङ्गं पूजयामि॥ इत्यङ्गपूजां प्रथमावरणार्चनं विधाय॥ अथावरणपूजां कुर्यात्॥ अथाष्टदलेषु पूर्वादिक्रमेण रामभक्ताय नमः रामभक्तपादुकां पूजयामि तर्पयामि १ महातेजसे नमः महातेजःपादुकां पू० त०२

कपिराज्ञे नमः कपिराजपादुकां पू० त० ३ महा
बलाय नमः महाबलपादुकां पू० त० ४ द्रोणाद्रिहा
रकाय नमः द्रोणाद्रिहारकपादुकां पू० त० ५ मेरुपी
ठिकार्चनकारकाय नमः मेरुपीठिकार्चनपादुकां पू०
त० ६ दक्षिणाशाभास्करायनमः दक्षिणाशाभास्कर
पादुकां पू० त० ७ सर्वविघ्ननिवारकायनमः सर्ववि
घ्ननिवारकपादुकां पू०त० ८ इति द्वितीयावरणम् ॥
पुनः तद्बहिश्चाष्टदलेषु पूर्वादिक्रमेण । सुग्रीवाय नमः
सुग्रीवपादुकां पू० त० १ अंगदायनमः अंगदपादु
कां पू० त० २ नीलाय नमः नीलपादुकां पू० त० ३

जांबवते नमः जांबवत्पादुकां पू० त० ४ नलाय नमः
नलपादुकां पू० त० ५ सुषेणाय नमः सुषेणपादुकां
पू० त० ६ द्विविदाय नमः द्विविदपादुकां पू० त० ७
मैन्दाय नमः मैन्दपादुकां पू० त० ८ इतितृतीयाव
रणम् ॥ पुनः चतुरस्त्रे दशदिक्षु पूर्वादिक्रमेण इंद्रा
यनमः इंद्रपादुकां पू० त० १ अग्नये नमः अग्निपा
पादुकांपू० त० २ यमाय नमः यमपादुकांपू० त०
३ निर्ऋतये नमः निर्ऋतिपादुकां पू० त० ४ वरुणा
यनमः वरुणपादुकां पू० त० ५ वायवे नमः वायुपा
दुकां पू०त० ६कुबेराय नमः कुबेरपादुकां पू० त०७

ईशानाय नमः ईशानपादुकां पू० त० ८ ब्रह्मणे नमः ब्रह्मपादुकां पू० त० ९ अनन्ताय नमः अनन्त पादुकां पू० त० १० इतिचतुर्थावरणम् ॥ इतिपुष्पा क्षतादिभिरावरणपूजां विधाय । धूपपात्रं फट् इति संपूज्य पुरतः स्थापयित्वा वामतर्जनीं स्पृशन् श्री पात्रामृतेन धूपं निवेदयामि निवेद्य वामेन पाणिना घण्टां वादयन् मध्यमानामिकांगुष्ठैर्धूपं धृत्वा गाय त्र्यामूलमंत्रेण त्रेधा धूपयेत् । ततो दीपं संमुखे सं स्थाप्य पूर्ववत्प्रोक्षणं पूजनं कृत्वा । वाममध्यमया दीपपात्रं स्पृशन्दीपं निवेदयामीति निवेद्य वामेन

पाणिना घण्टां वादयन्मध्यमानामिकामध्ये दीपपा
त्रमङ्गुष्ठेन धृत्वा दर्शयन् गायत्रीं मूलं च पठन्दीपं
निवेदयेत् । ततो नानानैवेद्यं स्वर्णरजतादिपात्रे नि
क्षिप्याहमित्यवगुण्ठ्य धेनुमुद्रयाऽमृतीकृत्य नैवेद्य
पात्रं स्पृशन् गायत्रीं मूलमंत्रं च पठन्दक्षानामिका
ङ्गुष्ठाभ्यामुत्सृजेत् । ततःपुनराचमनीयं दत्त्वा मूलेन
कर्पूरादिसुवासितं तांबूलं निवेदयामीति दत्त्वा ॥
अत्रावसरे केचन आवरणपूजां कुर्वंति ॥ अस्तु ॥
वीरेभ्यो बलिदानं दत्त्वा आरात्तिकं कृत्वा मंत्रपुष्पं
दत्त्वा क्षमाप्य संप्रार्थ्य कवचं पठित्वा मालां संपूज्य

प्रतिदिनं यथासंकल्पितं तत्संख्याकं नतु न्यूनाधिकं जपं कृत्वा। जपं निवेद्य सहस्रनामस्तोत्रं स्तवराजादिकं च पठित्वा देवं नमस्कृत्य वैश्वदेवं कृत्वा मौनेन भोजनं कुर्यात् ॥ इति नित्यार्चनाविधिः ॥ इति श्रीहरिकृष्णविनिर्मितबृ॰ ध॰ उपासनास्तबके हनुमदुपासनाध्याये हनुमत्पद्धतिनिरूपणं नाम चतुर्दशं प्रकरणम् ॥१४॥ अथ हनुमद्दीपदानपूजापद्धतिः ॥ आचम्य प्राणानायम्य देशकालौ स्मृत्वा। मम इह जन्मनि जन्मान्तरे च क्षिप्रामुकफलावाप्त्यर्थं श्रीरामरूपीहनुमद्देवताप्रीत्यर्थं मंत्रसिद्ध्य

र्थं पंचपलैकतैलेन वा यथाशक्त्या पंचपलमानताम्र
पात्रेण एकविंशतितन्तुनिर्मिताभिस्त्रिभिर्वर्त्तिभिर्नि
त्यदीपदानमहं करिष्य इति संकल्प्य ॥ सुमुखश्चैक
दंतश्चेति पठित्वा पुण्याहं वाचयित्वा गणेशं संपू
ज्य गुरुचरणारविंदं ध्यात्वा नमस्ते नाथेति संस्तु
त्य॥भक्त्या समागतोऽहं ते पादयोर्भक्तवत्सल। दीप
कार्यं च भवता संपाद्यं वै नमोनमः ॥ इत्याज्ञां गृही
त्वा कपिलागोमयोपलिप्तभूमौ दीपयन्त्रं विलिख्य
रक्तचन्दनरक्ततन्दुलैस्तद्यन्त्रं संपूर्य ॥ यद्वा धातुनि
र्मितयन्त्रं गोमयोपलिप्तभूमौ निधाय तन्मध्ये श्रीरा

मरूपीहनुमद्दीपयन्त्रराजाय नमः॥मूलं दीपप्रियाय श्रीहनुमते त्रिरावृत्तिः नमः ॥ अग्नीशासुरवायव्येषु हृदयादि० संपूज्य दिक्ष्वस्त्रं च संपूज्य-यंत्रराजमहाराजहनुमत्प्रियकारक । दीपं स्थापय मद्दत्तं मत्कामान्परिपूरय ॥ इतियंत्रराजं संप्रार्थ्य । ॐ हौं रामदूताय विद्महे वायुपुत्राय धीमहि तन्नो हनुमत्प्रचोदयात् ॥ १ ॥ इति गायत्रीमन्त्रेण पात्रमभिमन्त्र्य तेनैव मूलपूर्वेण दीपपात्रं यन्त्रोपरि स्थापयेत् । ॐ ह्रांह्रींह्रूंहनुमन्ताय एहि एहि मम सन्निहितं कुरु कुरु स्वाहा ॥१॥ अनेन शुद्धतैलेन पूरयामि जगत्पते ।

श्रीहनुमन्महावीर्य कार्यं साधय मे हित ॥ २ ॥
इति मंत्रेण दीपपात्रं तैलेनापूर्य तत्र चतुरंगुलां सु
क्ष्माग्रां स्थूलमूलां स्वर्णादिशलाकां दक्षिणतः क्षिप्त्वा
ॐ हौं हनुमन्वर्त्तिं कल्पय कल्पय स्वाहा ॥ कन्या
करस्पर्शिते यथातन्तुनिर्मिते वर्त्तिके श्रीहनुमते
इष्टान्मत्कामान्परिपूरयेतिवर्तिं दीपान्तरे निक्षिप्य
ॐ हौंहनुमन्संधुक्ष्व मम ईप्सितं सिद्धयतु स्वाहा ।
श्रीहनुमन्महावीर्य योगज्वलितविग्रह । भव सन्नि
हितो देव ज्वालारूपेण वर्त्तिषु ॥ १ ॥ ॐ ह्रांह्रींहूं
श्रीहनुमन्ममसमीहितमुद्दीपयोद्दीपय हुंफट्स्वाहा

रामप्रियाय हनुमते वातात्मजाय । यथा दीपयते दीपं तथा कार्यं प्रदीपय ॥ इतिपठित्वा मूलपूर्वकं गायत्र्या प्रज्वाल्य मूलगायत्रीभ्यां त्रिधाभिमंत्र्य प्राणप्रतिष्ठां कुर्यात् ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं ळं क्षं हं सः सोहं दीपस्य प्राणा इह प्राणाः पुनस्तान्युच्चार्य दीपस्य जीव इह स्थितः ॥ पुनस्ता न्युच्चार्य दीपस्य सर्वेन्द्रियाणि पुनस्तान्युच्चार्य दीप स्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा । इति त्रिः पठित्वा पुनस्तस्मि न्नेव हनुमत्प्राणप्रतिष्ठां कृत्वा पुनश्च अकारादिक्ष

कारांतं मातृकया मूलेन गायत्र्या चाभिमंत्र्य गंधादि दत्त्वा न्यासं कुर्यात् । मूलेन प्राणायामत्रयं कृत्वा ॐ अस्य श्रीद्वादशवर्णात्मकहनुमन्मंत्रस्य राम चंद्रऋषिः । जगतीछन्दः । हनुमान् देवता ॥ ह्स्सौं बीजम् । ह्स्ख्फ्रेंशक्तिः । हौंकीलकम् । दीपपूजने विनियोगः । रामचंद्रऋषये नमः शिरसि । जगती छंदसे नमः मुखे । हनुमद्देवतायै नमः हृदि । ह्स्सौं बीजाय नमः गुह्ये । ह्स्ख्फ्रेंशक्तये नमः पादयोः । हौंकीलकाय नमः सर्वाङ्गे । इतिऋष्यादिन्यासः ॥ हौं अंगु० । ह्स्फ्रेंतर्जं० ॥ ख्फ्रेंमध्य० ॥ ह्स्रौंअना०

ह्स्ख्फ्रैंकनि० ॥ ह्स्रौंकर० ॥ इतिकरन्यासः ॥ ह्रौं
हृदयाय नमः । ह्स्फ्रेंशिरसे स्वाहा । ख्फ्रेंशिखायै
वषट् । ह्स्रौंकवचायहुम् । ह्स्ख्फ्रेंनेत्रत्रयायवौषट् ।
ह्सौं अस्त्रायफट् । इति हृदयादिन्यासः ॥ मूलेन
सर्वाङ्गे॥ अथांगन्यासः। ह्रौं नमः मूर्ध्नि । हस्फ्रेंनमः
भाले। ख्फ्रेंनमः नेत्रयोः। ह्स्रौं नमः मुखे । ह्स्ख्फ्रें
नमःकंठे । ह्सौंनमः हस्तद्वये॥अथाक्षरन्यासः।हनु
मते नमः जंघयोः । नमोनमः पादयोः। हंनमःहृदि ।
नुंनमःउदरे । मं नमः नाभौ ॥ तें नमः लिङ्गे । नं
नमः जान्वोः । मं नमः पादयोः । मूलेन व्यापकं

विधाय । अथ ध्यानम्–अस्य श्रीहनुमद्दीपदान मालामंत्रस्य रामचंद्रऋषिः हनुमान् देवता दीपप्रदा नेप्रयोगसिद्धये जपे विनियोगः। रांरींरूंरैंरौंरः इत्य नेन करषडङ्गन्यासौ कृत्वा। ॐ हनुमन्ताय अनाथ नाथाय अनन्तबाहवे सेतुबन्धनाय रामप्रियाय वायु पुत्राय अंजनीगर्भरत्नाय इमं दीपं गृह्ण २ रक्ष २ दु ष्टान्नाशय २ पातय २ घातय २ शत्रून् जहि २ ॐ ह्रौं किलि २ बुभुक्कारेण ॐ स्वाहा ॥ मालामंत्रं का र्यपरत्वेन योजयित्वा दीपदेवं मानसैरुपचारैः संपू ज्य अग्रपूर्वोच्चारित एवं गुणविशेषणविशिष्टायां शुभ

पुण्यतिथौ मम निखिलोपद्रवशांतिपूर्वकं सकलाभी
ष्टसिद्ध्यर्थं श्रीरामरूपिहनुमद्देवताप्रीत्यर्थं पंचपले
कं वा यथाशक्त्या तैलनिर्मितं पंचपलमितताम्रपा
त्रस्थितं नित्यदीपं श्रीहनुमन्तायसंप्रददे न मम इत्यु
क्का साक्षतं जलं दक्षिणहस्तेनादाय मूलं गायत्रीं
चोच्चार्य ॐ ऐं इत्यादिद्वादशवर्णान् हनुमन्ताय अ
नाथनाथाय अनन्तबाहवे सेतुबंधनाय रामप्रियाय
वायुपुत्राय अंजनीगर्भरत्नाय हूं ह्रौं इमं दीपं गृह्ण २
मां रक्ष २ दुष्टान् नाशय२ पातय२घातय २ शत्रून्
जहि२ॐ ऐंश्रों ह्रां ह्रीं हं ह्रौं ह्स्फ्रें ख्फ्रें ह्स्रौं ह्स्ख्फ्रें

ह्सौं स्वाहा अनेन दीपवर्येण पश्चिमाभिमुखेन मां रक्ष २ मम वरप्रदानाय हूं ३ ह्रीं ३ क्लीं ३ स्वाहा जलं भूमौ क्षिप्त्वा । उदङ्मुखो भूत्वा करौसं पुटीकृत्य ॐ तंथंदंधंनंपंफंबंभंमं ॐ स्वाहा सकृज्ज पेत् ॥ मूलमंत्रस्य पूर्वोक्तन्यासान् विधाय । व्यग्र ताऽऽलस्यनिष्ठीवक्रोधपैशुन्यपादप्रसारणादिविधुरः शनैरोष्ठौ चालयन् ध्यानानुरक्तचेता मध्यमामध्य पर्वाणि मालां संस्थाप्य मेरुमनुलंघयन् अष्टोत्तरशतं जपेत् । ततो दीपे पुष्पांजलीन् दत्त्वा पूजामार भेत् । दीपाग्रे यंत्रं लिखेत् । तन्मध्ये मूलेन हनुमंतं

संपूज्य अग्निनैर्ऋत्यवायव्येशानकोणेषु हृदयादीन् संपूज्य स्वाग्रे नेत्रादिक्ष्वस्त्रं च संपूज्य मूलेनाधारं प्रक्षाल्य लिखितपीठे निधाय मूलेनाभिमंत्र्यमं वह्निमंडलाय धूम्रार्चिरादिदशकलात्मने श्रीहनुमते विशेषार्घः। अर्घपात्राधाराय नमः इति संपूज्य अस्त्रेण शंखं प्रक्षाल्य मूलेनासाद्य ॐ अर्कमण्ड लाय तपिन्यादिद्वादशकलात्मने श्रीहनुमन्ताय सामान्यार्घपात्राय नमः। इति संपूज्य ॐ मूलेन लोमविलोममातृकया परमामृतबुद्ध्या शुद्धजलेना पूय तत्र अकथादित्रिरेखं त्रिकोणं संचित्य हृदयाय

नमः । इति संपूज्य ॐ संसोमाय कामप्रदायामृ
तादिषोडशकलात्मने हनुमतेऽर्घामृताय नमः इति
संपूज्य अंकुशमुद्रया सूर्यमण्डलात् तीर्थानावाह्य
तज्जले निक्षिप्य मूलेनाष्टवारमभिमंत्र्य गंधाद्यैरभ्य
र्च्य धेनुमुद्रयाऽमृतीकृत्य कवचेनावगुंठ्य मत्स्य
मुद्रयाच्छाद्यास्त्रेण संरक्षणम् । शङ्खचक्रगरुडसंकली
करणमुद्राः प्रदर्श्य तज्जलेन देवमात्मानं पूजाद्र
व्याणि च संप्रोक्ष्य अनेनैव च क्रमेण पाद्याचम
नीयमधुपर्कपात्राणि संस्थाप्य पूज्यपूजकयोर्म
ध्ये विशेषार्घ्यपात्रं संस्थाप्य तेषु सर्वेषु शङ्खज

लाबेन्दुं निक्षिप्य आत्मानामिष्टदेवतारूपं सांचिं
त्य मूलेन मूर्ध्नि हृदये गुह्ये पादयोः सर्वांगे पञ्च पु
ष्पांजलीन्दत्त्वा प्राणायामत्रयपूर्वकं ऋष्यादिन्या
सान् विधाय दीपपीठे आधारशक्त्यादिपरतत्त्वा
न्तेभ्यो हनुमंताय पार्षदेभ्यो देवेभ्यो नमः । इति
पुष्पादिनासंपूज्य पीठस्याष्टदलेषु विमलादिशक्ति
भ्यो नमः । इत्येताः संपूज्य पुष्पांजलिमादाय ।
ॐ नमो हनुमते सर्वभूतात्मने वायुनन्दनाय सर्वा
त्मसंयोगयोगपद्मपीठात्मने नमः इति समस्तपीठं
संपूज्य पुष्पांजलिमादाय मूलमन्त्रान्ते । एह्येहि

हनुमन्वीरमहावीरामितद्युते । सांगायावाहये शीघ्रं सान्निध्यं कुरु सिद्धये ॥ १ ॥ देवेश भक्तिसुलभ परिवारसमन्वित । यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरो भव ॥ २ ॥ आवाहनादिनवमुद्राः प्रदर्श्य । षोडशोपचारैः पूजयेत् । तद्यथा--मूलं गायत्रीं चोच्चार्य सांगाय सायुधाय सवाहनाय सपरिवाराय सशक्तिकाय श्रीरामरूपिहनुमंताय आसनं परिकल्पयामि नमः ॥ १ ॥ एवमनेनैव मन्त्रेण यावदुपचारानुपचरेत्॥मू॰गा॰सां॰स्वागतम्। सुस्वागतम् ।२। मू॰ गा॰ सां॰ पाद्यम् । ३ । मूलं॰ गा॰

सां॰ अर्घ्यम्॰ । ४ । मू॰ गा॰ सां॰ आचमनीय
म्॰ । ५ । मू॰ गा॰ सां॰ मधुपर्कम्॰ । ६ ॥ मू॰
गा॰ सां॰ रत्नपादुकां॰ ॥ ७ ॥ मू॰ गा॰ सां॰ पं
चामृतस्नानम्॰ ॥ ८ ॥ मू॰ गा॰ सां॰ शुद्धस्नान
म्॰ ॥ ९ ॥ मू॰ गा॰ सां॰ आचमनीयं॰ ॥ १०॥
मू॰ गा॰ सां ॰ दिव्यवस्त्रयुगलं॰ ॥ ११ ॥ मू॰ गा॰
सां॰ नानालङ्कारागि॰ ॥ ११ ॥ मू॰ गा॰ सां॰
यज्ञोपवीतम् ॥ १३ ॥ मू॰ गा॰ सां॰ रत्नासिंहा
सनं॰ ॥ १४ ॥ मू॰ गा॰ सां॰ कनिष्ठिकया गंधं॰
॥ १५ ॥ मू॰ गा॰ सां॰ पुष्पं॰ ॥ १६ ॥ मू॰ गा॰

सां० धूपं० ॥ १७ ॥ मू० गा० सां० दीपं० ॥१८॥
मू० गा० सां० नैवेद्यं० ॥ १९ ॥ मू० गा० सां०
मध्ये पानीयम्० ॥ २० ॥ मू० गा० सां० उत्तरापो
शनं० ॥ २१ ॥ मू० गा० सां० तांबूलं० ॥ २२ ॥
इत्युपचर्यं-पूजितोऽसि यथाशक्ति यथालब्धोपचार
कैः । अनुज्ञां भगवन्देहि परिवारार्चनाय मे ॥ १ ॥
अथ पीठपूजाप्रारंभः॥ आं आधारशक्त्यै नमः । मूं
मूलशक्त्यै नमः । कूं कूर्माय नमः । वं वराहाय नमः।
भूं भूम्यै नमः । क्षीं क्षीरसागराय नमः । रं रत्नमंड
पाय नमः । पां पारिजाताय नमः । रं रत्नसिंहास

नाय नमः । पीठे पूर्वादिदिक्षु—धं धर्माय नमः । ज्ञां ज्ञानाय नमः । वं वैराग्याय नमः । ऐं ऐश्वर्याय नमः। अग्न्यादिकोणेषु—अं अग्नये नमः । अं अधर्माय नमः । अं अवैराग्याय नमः । अं अनैश्वर्यायनमः। सं सत्त्वायनमः । रं रजसे नमः । तं तमसे नमः । मां मायातत्त्वाय नमः । विं विद्यातत्त्वायनमः । कं कलातत्त्वाय नमः । आं आत्मने नमः। अं अन्तरात्मने नमः। पं परमात्मने नमः । ह्रीं ज्ञानात्मने नमः। चं चन्द्रमण्डलाय नमः । सूं सूर्यमण्डलाय नमः । सों सोममंडलाय नमः। विं विमलायै नमः। उं उत्क



दीपद

१३१

र्षायै नमः। ज्ञां ज्ञानायै नमः। क्रीं क्रियायै नमः। यों योगायै नमः। प्रं प्रकृत्यै नमः। शं शक्त्यै नमः। ईं ईशानायै नमः। अं अनुग्रहायै नमः। इति पीठं संपूज्य। अथावरणपूजा॥ केसरेषु हृदयाय॰ शिं शिरसे॰ शिं शिखायै॰ कं कवचाय॰ नं नेत्रत्रयाय॰ अं अस्त्राय॰ गंधाक्षतैरभ्यर्च्य। अभीष्टसिद्धिं मे देहि शरणागतवत्सल। भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्॥ पुष्पांजलिं दत्त्वा हस्तौ प्रक्षाल्य। अष्टदलपत्रेषु–रामभक्ताय॰। महातेजाय॰ कपिराजाय॰ महाबलाय॰ द्रोणाद्रि

हारकाय० मेरुपीठिकार्चनाय० दक्षिणाशाभास्क
राय० सर्वविघ्ननिवारकाय० गन्धाक्षतैरभ्यर्च्य-
अभीष्टसिद्धिं मे देहि० । द्वितीयावरणार्चनम् ॥२॥
पुष्पांजलिं दात्त्वा हस्तौ प्रक्षाल्य। षट्कोणेषु-सुग्री
वाय० अंगदाय० सुषेणाय० नलाय० नीलाय०
जांबवते० प्रहस्ताय० सुवेषाय०गन्धाक्षतैरभ्यर्च्य-
अभीष्टसिद्धिं मे देहि० । तृतीयावरणार्चनम् ॥३॥
पुष्पांजलिं दत्त्वा हस्तौ प्रक्षाल्य। दलसंधिषु-रक्षो
घ्नाय०विषघ्नाय०रिपुघ्नाय० व्याधिघ्नाय० चौरघ्ना०
भूतघ्नाय० परशस्त्रास्त्रमन्त्रघ्नाय० भयघ्नाय० गन्धा

क्षतैरभ्यर्च्य। अभीष्टसिद्धिंमेदेहि०। चतुर्थावरणार्चनम् ॥ ४ ॥ भूपुरे प्रथमरेखायामष्टदिक्षु–ऐरावताय० पुंडरीकाय० वामनाय० कुमुदाय० अंजनाय० पुष्पदन्ताय० सार्वभौमाय० सुप्रतीकाय० गन्धाक्षतैरभ्यर्च्य। अभीष्टसिद्धिं मे देहि०। पञ्चमावरणार्चनम् ॥ ५ ॥ भूपुरे द्वितीयरेखायां पूर्वादिक्रमेण–लं इन्द्राय सुराधिपतये सांगाय सपरिवाराय नमः १ रंअग्नये तेजोधिपतये सां० २ टं यमाय प्रेताधिपतये सां० ३ क्षं निर्ऋतये रक्षोधिपतये सां० ४ वं वरुणाय जलाधिपतये सां० ५ यं वायवे प्राणाधिपतयेसां० ६

संसोमाय नक्षत्राधिपतयेसां० ७ हं ईशानायविद्याधि पतयेसां० ८ पूर्वेशानमध्ये अं ब्रह्मणे लोकाधिपतये सां० ९ निर्ऋतिवरुणमध्येह्रीं अनंतायनागाधिपतये सां० १० गन्धाक्षतैरभ्यर्च्य । अभीष्टसिद्धिं मे देहि० षष्ठावरणपूजनम् ॥ ६ ॥ भूपुरे तृतीयरेखायाम् । वंवज्राय० शं शक्तये० दं दंडाय० खं खड्गाय० पं पाशाय० अंअंकुशाय० गं गदायै० शूं शूलाय० पं पद्माय० च चक्राय० गन्धाक्षतैरभ्यर्च्य । अभीष्टसिद्धिंमे देहि० । सप्तमावरणार्चनम् ॥ ७ इत्यावरणपूजां कृत्वा । धूपदीपनैवेद्यादीनि समर्प्य प्रणवादिसवी

जान्यायुधानि सम्पूज्य ततोऽङ्गदेवताः प्रधानदेव
तायां विलीना विभाव्य धूपस्थानं सम्पूज्य ।
मूल० गायत्री साङ्ग० ॐ वनस्पति रसोद्भूतो गं
धाढ्यो गन्ध उत्तमः । अघ्रेयः सर्वदेवानां धूपोयं
प्रतिगृह्यताम् । धूपं० । दीपपात्रं संपूज्य वामम
ध्यमया स्पृष्ट्वा । मूल० गायत्रीसां० । ॐ सुप्रकाशो
महादीपः सर्वतस्तिमिरापहः । सबाह्याभ्यंतरज्यो
तिर्दीपोऽयं प्रतिगृह्यताम् ॥दीपं०॥ अथ नैवेद्यम् ॥
वमितिअमृतजलेनान्नं स्वर्णादिपात्रे निधाय तत्पा
त्रं त्रिकोणवृत्तचतुरस्रमंडले निधाय तुलसीं दत्त्वा

मूलेन शंखांबुना प्रोक्ष्य धेनुमुद्रया जलममृतीकृत्य चक्रमुद्रया संरक्ष्य अस्त्रेणावगुंठ्य मूलेन संक्षोभ्य गायत्र्याभिमंत्र्य वं अमृतात्मकं वामांगुष्ठेन पात्रं स्पृशन्–अमृतोपस्तरणमासिस्वाहा । इति जलं दत्त्वा मू०गा०सां०ॐसत्पात्रसिद्धं सुहविर्विविधानेकभक्षणम् । निवेदयामि ते देव सानुगाय जुषस्व भोः ॥ नैवेद्यं० ॥ ॐ प्राणाय स्वाहेत्यादिप्राणादिपंचमुद्राः प्रदर्श्य ग्रासमुद्राश्च प्रदर्श्य देवं भुंजानं ध्यायन् क्षण मूलमंत्रं जपंस्तिष्ठेत् । ततो अमृतापस्तरणमासि स्वाहेति उत्तरापोशनं दत्त्वा उच्छिष्टान्नं विष्वक्सेनाय

समर्प्य । अथ नित्यहोमं कुर्यात्-लौकिकमाग्निं प्रोक्ष्य पर्युक्ष्य वैदिकक्रमेण संस्कृत्य मूलेन देवमावाह्य गंधपुष्पैः संपूज्य पंचविंशति घृताक्तान्नाहुतीर्हुत्वा ॐ पीठदेवताभ्यः स्वाहा । ॐ अङ्गदेवताभ्यःस्वाहा इति हुत्वा मूलेन पूर्णाहुतिं दत्त्वा मू० गा०सां० । शुद्धाचमन० करोद्वर्त्तनं० मुखवासार्थं तांबूलं० आदर्शं० छत्रं० चामरं० सर्वराजोपचारान्० । मू०गा० सां० महानीराजनदीपं० । मू०गा०सां० मंत्रपुष्पं पंचनमस्कारान् कृत्वा प्रदक्षिणाचतुष्टयं विधाय स्तोत्रैः स्तुत्वा प्रार्थनास्तोत्रादिभिः प्रार्थयेत् । ततो यथाशक्ति

मूलमंत्रं नित्यक्रमसंख्याकं वा जप्त्वा कवचपाठं कृत्वा भगवते पूजां जपं च निवेद्य गुरवे दक्षिणां संकल्प्य विसर्जनमुद्रयाञ्जलौ चागतं नासारंध्रद्वारा हृदयं प्रविष्टं भगवन्तं विभाव्य मूलेन पंचाङ्गं विधाय गुरुं नमस्कृत्य देवं साष्टाङ्गं प्रणम्य क्षमाप्य यस्यस्मृत्येत्यादि जपित्वा परमेश्वरार्पणं कृत्वा सुहृद्युतोभुंजीत॥ रचितो हरिरायेण नित्यदीपविधिक्रमः। आब्रह्मस्तंबपर्यन्तं देशिकान्सुखयत्यलम् ॥ इति श्रीहरिकृष्णविनिर्मिते बृ० ध० उपासनास्तबके हनुमदुपासनाध्याय हनुमद्दीपदानपूजापद्धतिनिरूपणं पञ्च

दशं प्रकरणम्॥ १५॥ श्लोकाः॥ १०९॥ अथसप्तमुखी हनुमत्कवचम् ॥ उक्तं चाथर्वणरहस्ये—ॐ अस्य श्री सप्तमुखिवीरहनुमत्कवचस्तोत्रमंत्रस्य नारदऋषिः। अनुष्टुप्छंदः श्रीसप्तमुखीकपिः परमात्मा देवता। ह्रांबीजम्। ह्रींशक्तिः। ह्रूं कीलकम्। मम सर्वाभी ष्टसिद्ध्यर्थे जपे विनियोगः। ॐ ह्रां अंगु० ॐ ह्रीं तर्ज० ॐ ह्रूंमध्य० ॐ ह्रैंअना० ॐ ह्रौंकनि० ॐ ह्रः कर० एवं हृदयादिन्यासः॥ अथ ध्यानम्—वंदे वानरसिंहसर्परिपुवाराहाश्वगोमानुषैर्युक्तं सप्तमुखैः करैर्द्रुमगिरिं चक्रं गदां खेटकम्। खट्वाङ्गं हलमंकुशं

मुखी

फणिसुधाकुंभौ शराब्जाभयाञ्छूलं सप्तशिखं द
धानममरैः सेव्यं कपिं कामदम् ॥ ब्रह्मोवाच ॥ सप्त
शीर्ष्णः प्रवक्ष्यामि कवचं सर्वसिद्धिदम् । जप्त्वा ह
नुमतो नित्यं सर्वपापैः प्रमुच्यते ॥ १ ॥ सप्तस्वर्ग
पतिः पायाच्छिखां मे मारुतात्मजः । सप्तमूर्धा शि
रोऽव्यान्मे सप्तार्चिर्भालदेशकम् ॥ २ ॥ त्रिःसप्तने
त्रो नेत्रेऽव्यात्सप्तस्वरगतिः श्रुती । नासां सप्तपदा
र्थोऽव्यान्मुखं सप्तमुखोऽवतु ॥ ३ ॥ सप्तजिह्वस्तु रसनां
रदान्सप्तहयोऽवतु । सप्तच्छंदो हरिः पातु कण्ठं बाहू
गिरिस्थितः ॥ ४ ॥ करौ चतुर्दशकरो भूधरोऽव्या

न्ममाङ्गुली: । सप्तर्षिध्यातो हृदयमुदरं कुक्षिसागरः ॥५॥ सप्तद्वीपपतिश्चित्तं सप्तव्याहृतिरूपवान् । कटिं मे सप्तसंस्थार्थदायकः सक्थिनी मम ॥ ६ ॥ सप्त ग्रहस्वरूपी मे जानुनी जंघयोस्तथा । सप्तधान्यप्रियः पादौ सप्तपातालधारकः ॥७॥ पशून्धनं च धान्यं च लक्ष्मीं लक्ष्मीप्रदोऽवतु । दारान् पुत्रांश्च कन्याश्च कुटुंबं विश्वपालकः ॥८॥ अनुक्तस्थानमपि मे पायाद्वायुसुतः सदा । चौरेभ्यो व्यालदंष्ट्रिभ्यः शृंगिभ्यो भूतराक्षसात् ॥ ९ ॥ दैत्येभ्योऽप्यथ यक्षेभ्यो ब्रह्मराक्षसजाद्भयात् । दंष्ट्राकरालवदनो हनुमान्मां सदा

ऽवतु ॥ १० ॥ परशस्त्रमंत्रतंत्रयंत्राग्निजलविद्युतः । रु
द्रांशः शत्रुसंग्रामात्सर्वावस्थासु सर्वभृत् ॥ ११ ॥ ॐ
नमो भगवते सप्तवदनाय आद्यकपिमुखाय वीरहनु
मते सर्वशत्रुसंहारणाय ठंठंठंठंठंठंठं ॐ नमः स्वाहा
॥ १२ ॥ ॐ नमो भगवते सप्तवदनाय द्वितीयनार
सिंहास्याय अत्युग्रतेजोवपुषे भीषणाय भयनाशना
य हंहंहंहंहंहंहं ॐ नमः स्वाहा ॥ १३ ॥ ॐ नमो
भगवते सप्तवदनाय तृतीयगरुडवक्त्राय वज्रदंष्ट्राय म
हाबलाय सर्वरोगविनाशनाय मंमंमंमंमंमंमं ॐ नमः
स्वाहा ॥ १४ ॥ ॐ नमो भगवते सप्तवदनाय चतु

थंकोद्दतुण्डाय सौमित्रिरक्षकाय पुत्राद्याभिवृद्धिकराय लंलंलंलंलंलंलं ॐ नमः स्वाहा ॥ १५ ॥ ॐ नमो भगवते सप्तवदनाय पंचमाश्ववदनाय रुद्रमूर्त्तये सर्ववशीकरणाय सर्वनिगमस्वरूपाय रुंरुंरुंरुंरुंरुंरुं ॐ नमः स्वाहा ॥ १६ ॥ ॐ नमो भगवते सप्तवदनाय षष्ठगोमुखाय सूर्यस्वरूपाय सर्वरोगहराय मुक्तिदात्रे ॐॐॐॐॐॐॐ ॐ नमः स्वाहा॥ १७॥ ॐ नमो भगवते सप्तवदनाय सप्तममानुषमुखाय रुद्रावताराय अंजनीसुताय सकलदिग्यशोविस्तारकाय वज्रदेहाय सुग्रीवसाह्यकराय उदधिलंघनाय सीता

शुद्धिकराय लंकादहनाय अनेकराक्षसांतकाय रामा
नंददायकाय अनेकपर्वतोत्पाटकाय सेतुबंधकाय क
पिसैन्यनायकाय रावणांतकाय ब्रह्मचर्याश्रामिणे
कौपीनब्रह्मसूत्रधारकाय रामहृदयाय सर्वदुष्टग्रहनि
वारणाय शाकिनीडाकिनीवेतालब्रह्मराक्षसभैरवग्रह
यक्षग्रहपिशाचग्रहब्रह्मग्रहक्षात्रियग्रहवैश्यग्रहशूद्रग्र
हांत्यजग्रहम्लेच्छग्रहसर्पग्रहोच्चाटकाय मम सर्व
कार्यसाधकाय सर्वशत्रुसंहारकाय सिंहव्याघ्रादिदु
ष्टसत्त्वाकर्षकायै-काहिकादिविविधज्वरच्छेदकाय
परयंत्रमंत्रतंत्रनाशकाय सर्वव्याधिनिकृंतकाय सर्पा

दिसर्वस्थावरजंगमविषस्तंभनकराय सर्वराजभय चोरभयाग्निभयप्रशमनाया-ध्यात्मिकाधिदैविकाधि भौतिकतापत्रयनिवारणाय सर्वविद्यासर्वसंपत्सर्वपु रुषार्थदायकायासाध्यकार्यसाधकाय सर्ववरप्रदाय सर्वाभीष्टकराय ॐ ह्रां ह्रीं हूं ह्रैं ह्रौं ह्रः ॐ नमः स्वाहा ॥ १८ ॥ य इदं कवचं नित्यं सप्तास्यस्य हनूमतः । त्रिसंध्यं जपते नित्य सर्वशत्रुविनाशनम् ॥ १९ ॥ पुत्रपौत्रप्रदं सर्वं संप्रदाज्यप्रदं परम् । सर्वरोगहरं चायुःकीर्त्तिदं पुण्यवर्धनम् ॥ २० ॥ राजानं स वशं नीत्वा त्रैलोक्यविजयी भवेत । इदं हि पर

मं गोप्यं देयं भक्तियुताय च ॥२१॥ न देयं भक्ति हीनाय दत्त्वा स निरयं व्रजेत् ॥ २२॥ नामानि सर्वाण्यपवर्गदानि रूपाणि विश्वानि च यस्य सन्ति । कर्माणि देवैरपि दुर्घटानि त मारुतिं सप्तमुखं प्रपद्ये ॥ २३ ॥ इति श्रीहरिकृष्णविनिर्मिते बृ० ध० उपासनास्तबके हनुमदुपासनाध्यायेऽथर्वणरहस्योक्तं सप्तमुखीहनुमत्कवचनिरूपणं नाम षोडशं प्रकरणम् ॥ १६ ॥ श्लोकाः १३५ ॥ श्रीहनुमत्सहस्रनामस्तोत्रम् ॥ रुद्रयामले—कैलासशिखरे रम्ये देवदेवं महेश्वरम् । ध्यानोपरतमासीनं नन्दिशृङ्गिग

णैर्वृतम् ॥ १ ॥ ध्यानान्ते च प्रसन्नास्यमेकान्ते स
मुपस्थितम् । दृष्ट्वा शंभं तदा देवी पप्रच्छ कमला
नना ॥ २ ॥ देव्युवाच ॥ शृणु देव प्रवक्ष्यामि सं
शयोऽस्ति महान्मम । रुद्रैकादशमाख्यातं पुराहं
न च वेद्मि तम् ॥ ३ ॥ कथयस्व महाप्राज्ञ सवता
निर्णयं शुभम् । यमाराधयतो लोके भुक्तिमुक्तिफलं
भवेत् ॥ ४ ॥ मंत्रं यंत्रं तथा न्यास ध्यानं च विधि
पूजनम् । तत्सर्वं ब्रूहि मे नाथ कृतार्था च भवाम्य
हम् ॥ ५ ॥ ईश्वर उवाच ॥ शृणु देवि प्रवक्ष्यामि
गोप्यं सर्वागमे सदा । सर्वस्वं मम लोकानां नृणां

स्वर्गापवर्गदम् ॥ ६ ॥ दशविष्णुर्द्वादशार्कास्ते चैका
दश संस्मृताः । रुद्रः परमचण्डश्च लोकेऽस्मिन्भुक्ति
मुक्तिदः ॥ ७ ॥ हनुमान्स महादेवः कालकालः स
दाशिवः । भुक्तिदो मुक्तिकैवल्यमुक्तिदः सर्वकामदः
॥ ८ ॥ चिद्रूपी च जगद्रूपस्तथारूपाविराडभूत् ।
रावणस्य वधार्थाय रामस्य च हिताय च ॥ ९ ॥
अंजनीगर्भसंभूतो वायुरूपी सनातनः । यस्य स्म
रणमात्रेण सर्वविघ्नं विनश्यति ॥ १० ॥ मंत्रं तस्य
प्रवक्ष्यामि कामदं सुरदुर्लभम् । नित्यं परतरं लोके
देवदैत्येषु दुर्लभम् ॥ ११ ॥ प्रणवं पूर्वमुद्धृत्य काम

राजं ततो वदेत्। ॐ नमो भगवते हनुमतेऽपि ततो वदेत् ॥ १२ ॥ तता वैश्वानरो मायामंत्रराजमिमं प्रिये । एवं बहुतरा मंत्राः सर्वशास्त्रेषु गोपिताः ॥१३॥ येन विज्ञानमात्रेण त्रैलोक्यं वशमानयेत् । वह्निं शीतं करोत्येव वातं च स्थिरतां नयेत् ॥१४॥ विघ्नं च नाशयत्याशु दासवत्स्याज्जगत्त्रयम् । ध्यानं तस्य प्रवक्ष्यामि हनुर्येन प्रसीदति ॥ १५ ॥ प्रदीप्त स्वर्णवर्णाभं बालार्कारुणलोचनम् । स्वर्णमेरुविशा लाङ्गं शतसूर्यसमप्रभम्॥१६॥ रक्ताम्बरं धरासीनं सुग्रीवादियुतं तथा । गोष्पदीकृतवारीशं मशकी

कृतराक्षसम् ॥ १७॥ पुच्छवन्तं कपीशं तं महारुद्रं भयङ्करम् । ज्ञानमुद्रालसद्बाहुं सर्वालङ्कारभूषितम् ॥ १८ ॥ ध्यानस्य धारणादेव विद्वान्मुक्तःसदानरः । त्रिषु लोकेषु विख्यातः सर्वत्र विजयी भवेत् ॥ १९ ॥ नाम्नां तस्य सहस्र तु कथयिष्यामिते शृणु । यस्य स्मरणमात्रेण वादी मूको भवेद्ध्रुवम् ॥ २०॥ स्तम्भनं परसैन्यानां मारणाय च वैरिणाम् । दारयेच्छाकिनीः शीघ्रं डाकिनीभूतप्रेतकान् ॥ २१ ॥ हरणं रोगशत्रूणां कारणं सर्वकर्मणाम् । तारणं सर्वविघ्नानां मोहनं सर्वयोषिताम् ॥ २२ ॥ धारणं सर्वयोगानां

वारणं शीघ्रमापदाम् ॥ २३ ॥ ॐ अस्य श्रीहनुमत्
सहस्रनामस्तोत्रमंत्रस्य सदाशिव ऋषिः । अनुष्टुप्
छंदः श्रीहनुमान् देवता । ॐ क्लीं इति बीजम् ।
नम इति कीलकम् । स्वाहेति शक्तिः । समस्तपुरुषा
र्थसिद्ध्यर्थं जपे विनियोगः । ओमोंकारनमोरूपमों
नमोरूपपालकः । ॐकारमयोङ्कारकृदोङ्कारात्मा
सनातनः॥२४॥ब्रह्मब्रह्ममयो ब्रह्मज्ञानी ब्रह्मस्वरूप
वित् । कपीशः कपिनाथश्च कपिनाथः सपालकः
॥२५॥ कपिनाथप्रियःकालः कपिनाथस्य घातकः ।

कपिनाथः शोकहर्ता कपिमर्त्ता कपीश्वरः ॥ २६ ॥

कपिजीवनदाता च कपिमूर्तिः कपिर्भृतः। कालात्मा कालरूपी च कालकालस्तु कालभुक् ॥२७॥ कालज्ञानी कालकर्ता कालहानिः कलानिधिः । कलानिधिप्रियः कर्ता कलानिधिसमप्रभः॥२८॥ कलापी कलपाता च कीशत्राता किशां पतिः । कमलापतिप्रियः काकस्वरघ्नः कुलपालकः ॥२९॥ कुलभर्ता कुलत्राता कुलाचारपरायणः । काश्यपाह्लादकः काकध्वंसी कर्मकृतां पतिः ॥ ३० ॥ कृष्णः कृष्णस्तुतिः कृष्णाकृष्णरूपो महात्मवान्। कृष्णवेत्ता कृष्णभर्ता कपीनः क्रोधवान् कपिः ॥ ३१॥ कालारातिः

कुबेरश्च कुबेरवनपालकः । कुबेरधनदाता च कौस
ल्यानन्दजीवनः ॥ ३२ ॥ कौशलेशप्रियः केतुः
कपाली कामपालकः । कारुण्यः करुणारूपः करु
णानिधिविग्रहः ॥ ३३ ॥ कारुण्यकर्ता दाता च
कपिः काव्यः कृतान्तकः। कूर्मः कूर्मपतिः कूर्मभर्ता
कूर्मस्य प्रेमवान् ॥ ३४ ॥ कुक्कुटः कुक्कुटाह्वानःकु
ञ्जपःकमलाननः । कुञ्जरः कलभः कोकिनादजित्क
ल्पजीवनः॥ ३५ ॥ कल्पाभवासी कल्पान्तत्राता क
ल्पविबोधकः । कलभः कलहस्तश्च कम्पः कम्पपति
स्तथा॥ ३६ ॥ कर्मफलप्रदः कर्मा कमनीयःकलाप

वान् । कमलासनबंधश्च कमलासनपूजकः ॥ ३७ ॥ कमलासनसेवी च कमलासनमानितः । कमलासनप्रियः कंबुः कंबुकंठोऽपि कामधुक् ॥ ३८॥ किञ्जल्करूपी किञ्जल्कः किञ्जल्कावनिवासकः । खगनाथप्रियः खड्गी खगनाथप्रहारकः ॥ ३९ ॥ खगनाथसुपूज्यश्च खगनाथप्रबोधकः । खगनाथसुपूज्यश्च खरध्वंसी खरान्तकः ॥ ४० ॥ खरारिप्रियबन्धुश्च खरारिजीवनः सदा । खड्गहस्तः खड्गधनः खड्गहानी च खड्गपः ॥ ४१ ॥ खञ्जरीटप्रियः खञ्जः खञ्जदाता खमूर्तिमान् । खेचरः खेचरदाता खेच

रात्मा खरारिजित् ॥ ४२ ॥ खञ्जरीटपतिः पूज्यः खञ्जरीटेव चञ्चलः । खद्योतबन्धुः खद्योतः खद्योतनप्रियः सदा ॥ ४३ ॥ गरुत्मान् गरुडो गोप्यो गरुत्मद्गर्वहारकः । गर्विष्ठो गर्वहर्ता च गर्वहा गर्वनाशकः ॥ ४४ ॥ गर्वी गुणप्रियो गाणो गुणसेवी गुणान्वितः । गुणत्राता गुणरतो गुणवन्तप्रियो गुणी ॥ ४५ ॥ गणेशो गणपाता च गणरूपो गणप्रियः । गंभीरोऽथ गुणाकारो गरिमा गरिमप्रदः ॥ ४६ ॥ गणरक्षोगणहरो गणदो गणसेवितः । गवेशो गवयत्राता गर्जितः सगणाधिपः ॥ ४७ ॥ गन्धमाद

न्हर्ता च गन्धमादनपूजकः । गन्धमादनसेवी च गन्धमादनरूपधृक् ॥४८॥ गुरुर्गुरुप्रियो गौरो गुरुसेव्या गुरून्नतः । गुरुगीतापरो गीतागीतविद्यागुरुर्गुरुः॥४९॥गीताप्रियो गीतरतो गीतज्ञोऽगीतवानपि। गायत्र्या जापको गोष्ठो गोष्ठदेवोऽथ गोष्ठपः ॥५०॥ गोपालो गोपदो गोष्ठो गोपीवल्लभवत्सलः । गोपीजनाप्रियो गन्धो गन्धपो गन्धपूजकः ॥ ५१ ॥ गोष्पदीकृतवाराशिो गोविन्दो गोपबन्धकः । गोवर्धनधरो गर्वो गोवर्धनप्रपूजकः ॥ ५२ ॥ गन्धर्वो गन्धर्वरतो गन्धर्वानन्दनान्दितः । गन्धो गदाधरो गुप्तो

गदाया गुह्यदेश्वरः ॥ ५३ ॥ गिरिजापूजको गीश्च गीर्वाणो गीष्पतिस्तथा । गिरिर्गिरिप्रियो गर्वो गर्भपो गर्भवासकः ॥५४॥ गभस्तिग्रासको ग्रासो ग्रासदाता ग्रहेश्वरः । ग्रहो ग्रहेशपो ग्राहो ग्रहदोषविनाशनः ॥ ५५ ॥ ग्रहारूढो ग्रहपतिर्ग्रहणो ग्रहणाधिपः । गोलो गव्यो गवेष्यश्च गवाक्षो मोक्षदायकः ॥ ५६ ॥ गणो गम्यो गण दाता गरुडध्वजवल्लभः । गेहो गेहप्रदो गम्यो गीतागानपरायणः ॥ ५७ ॥ गह्वरो गह्वरत्राणो गर्गो गर्गाश्रयप्रदः । गर्गप्रियो गर्गरतो गौतमो गौतमप्रदः ॥ ५८ ॥ गङ्गास्नायी गया

नाथो गयापिण्डप्रदायकः। गौतमीतीर्थचारी च गौ
तमीतीर्थपूजकः ॥ ५९ ॥ गगणेन्द्रो गणत्राता ग्रन्थ
दो ग्रन्थकारकः। घनाङ्गो घातको घोरो घोररूपी
घनप्रदः॥ ६० ॥ घोरदंष्ट्रो घोरनखो घोरघाती घने
तरः। घोरराक्षसघाती च घोररूप्यघदर्पहा ॥६१॥
घर्मोघर्मप्रदश्चैव घर्मरूपी घनाघनः। घनध्वनिरतो
घण्टावाद्यप्रियघृणाकरः ॥ ६२ ॥ घौघो घनस्वनो
घूर्णो घूर्णितोऽपि वनालयः। ङकारो ङप्रदो ङन्त
श्चन्द्रिकामोदमोदकः ॥ ६३ ॥ चन्द्ररूपश्चन्द्रवन्द्य
श्चन्द्रात्मा चन्द्रपूजकः। चन्द्रप्रेमश्चन्द्राबिम्बश्चा

मराप्रियचञ्चलः ॥ ६४ ॥ चन्द्रवक्त्रश्चकोराक्षश्चन्द्र
नेत्रश्चतुर्भुजः । चंचलात्मा चरश्चामी चलत्खञ्जन
लोचनः ॥ ६५ ॥ चिद्रूपश्चिन्नपानश्च चलच्चित्ताचि
तार्चितः । चिदानन्दाश्चितश्चैत्रश्चैत्रवंशस्य पालकः
॥ ६६ ॥ छत्रश्छत्रप्रदश्छत्री छत्ररूपी छिदांछदः ।
छलहा छलदश्छित्रश्छिन्नघाती क्षपाकरः ॥ ६७ ॥
छन्नरूपी छन्नहारी छतीछलतरुस्तथा । छायाकर
द्युतिश्छन्दश्छंदविद्याविनोदकः ॥ ६८ ॥ छिन्नारा
तिश्छिन्नपापश्छन्दवारणवाहकः । छन्दश्छत्रहन
श्छिपश्छवनश्छन्मयश्छमी ॥६९॥ क्षमागारः क्ष

माबन्धः क्षपापातिप्रपूजकः । छलघाती छिद्रहारी छिद्रान्वेषणपालकः ॥ ७० ॥ जनो जनार्दनो जेता जितारिर्जितसङ्गरः। जितमृत्युर्जरातीतो जनार्दनप्रियो जयः ॥७१॥ जयदो जयकर्ता च जयपाता जयप्रियः। जितेन्द्रियो जिताराातिर्जितेन्द्रियप्रियो जयी ॥ ७२ ॥ जगदानन्ददाता च जगदानन्दकारकः । जगद्वंद्यो जगज्जीवो जगतामुपकारकः ॥७३॥ जगद्धाता जगद्धारी जगद्बीजो जगत्पिता । जगत्पतिप्रियो जिष्णुर्जिष्णुजिज्जिष्णुरक्षकः ॥७४॥ जिष्णुवन्द्यो जिष्णुपूज्यो जिष्णुमूर्तिविभूषितः । जिष्णु

प्रियो जिष्णुरतो जिष्णुलोकाभिवासकः ॥ ७५ ॥
जयो जयप्रदो जायो जायको जयजाड्यहा । जय
प्रियो जनानन्दो जनदो जनजीवनः॥७६॥ जयानंदो
जपापुष्पवल्लभो जयपूजकः । जाड्यहर्ता जाड्य
दाता जाड्यकर्ता जडप्रियः॥ ७७ ॥ जगन्नेता जग
न्नाथो जगदीशो जनेश्वरः। जगन्मङ्गलदो जीवो जग
त्पावनपावनः ॥७८॥ जगत्राणो जगत्प्राणो जानकी
पतिवत्सलः । जानकीपातिपूज्यश्च जानकीपति
सेवकः ॥ ७९ ॥ जानकीशोकहारी च जानकीदुः
खभञ्जनः । यजुर्वेदो यजुर्वक्ता यजुःपाठप्रियो

व्रती॥८०॥ जिष्णुर्जिष्णुरतो जिष्णुधाता जिष्णुविनाशनः। जिष्णुहा जिष्णुपाता तु जिष्णुराक्षसघातकः॥८१॥ जतीनामग्रगण्यश्च जतीनां वरदायकः। झुंझुरो झूर्झनवहो झंझावातनिषेवितः॥८२॥ झिल्लीरवस्वनो ञन्तो ञवर्णोऽञनतो ञदः। टकारादिष्टकारान्तष्टवर्णष्टप्रपूजकः॥ ८३ ॥ टिट्टिभाष्टिट्टिभरतष्टिट्टिभप्रियवत्सलः। ठकारवर्णनिलयष्ठकारार्णववासितः॥ ८४ ॥ ठकारवीरनिरतष्ठकाराप्रियदर्शकः। डमरुध्वनिरतो डंको डंकिनीप्राणहारकः ॥ ८५ ॥ डाकिनीवरदाता च डाकिनीभयनाशनः।

डिण्डिमध्वनिकर्ता च डिम्भो डिम्भातरेतरः ॥८६॥
ढक्काढक्कानवो ढक्कावाद्यढक्कामहोत्सवः । णंत्यो
णान्तो णवर्णश्च णसेव्यो णप्रपूजकः ॥ ८७ ॥
तंत्री तंत्राप्रियस्तल्पस्तंत्राजित्तंत्रवादकः । तंत्रपूज्य
स्तंत्ररतस्तंत्रविद्याविशारदः ॥ ८८ ॥ तंत्रमंत्र
जयी तंत्रधारकस्तंत्रवाहकः । तंत्रवेत्ता तंत्रकर्ता तंत्र
यंत्रवरप्रदः ॥ ८९ ॥ तंत्रदस्तंत्रदाता च तंत्रपस्तं
त्रदायकः । तत्त्वदाता च तत्त्वज्ञस्तत्त्वस्तत्त्वप्र
काशकः ॥ ९० ॥ तंद्रा च तपनस्तल्पस्तलात
लतिवासकः । तपस्तपःप्रियस्तापत्रयस्तापी तपः

पतिः॥९१॥तपस्वी च तपोज्ञाता तपत्यामुपकारकः।
तपास्तपोव्रतस्तापी तापदस्तापहारकः ॥ ९२ ॥
तपःसिद्धिस्तपोऋद्धिस्तपोनिधिस्तपःप्रभुः। तीर्थ
स्तीर्थरतस्तीव्रस्तीर्थवासी तु तीर्थदः॥ ९३ ॥ तीर्थ
पस्तीर्थकृत्तीर्थस्वामी तीर्थविरोधकः । तीर्थसेवी
तीर्थपतिस्तीर्थव्रतपरायणः ॥ ९४ ॥ त्रिदोषघ्ना
त्रिनेत्रश्च त्रिनेत्राप्रियपालकः । त्रिनेत्राप्रियदासश्च
त्रिनेत्राप्रियपूजकः ॥ ९५॥ त्रिविक्रमास्त्रिपादूर्ध्वस्तर
णिस्तारणिस्तमः । तमोरूपी तमोध्वंसी तमसस्त
मघातकः ॥ ९६ ॥ तमोधृक्तामसस्तस्तमोमाली

तमोऽन्तकः । तमोहृत्तमकृत्ताम्रस्ताम्रौषधिगुणप्रदः ॥ ९७॥ तैजसस्तेजसां मूर्त्तिस्तेजसः प्रतिपालकः। तरुणस्तर्कविद्या च तर्कशास्त्रविशारदः ॥ ९८ ॥ तिमिङ्गिलस्तत्त्वकर्ता तत्त्वदाता च तत्त्ववित् । तत्त्वदर्शी तत्त्वगामी तत्त्वभुक्तत्त्ववाहनः ॥ ९९ ॥ त्रिदिव त्रिदिवेशश्च त्रिकालश्च तामिस्रहा । स्थाणुः स्थाणुप्रियस्थाणुः सर्वतोऽपि च वासकः ॥ १०० ॥ दयासिन्धुर्दयारूपो दयानिधिर्दयापरः । दयामूर्ति र्दयादाता दयादानपरायणः ॥ १ ॥ देवेशो देवदो देवो देवराजाधिपालकः । दीनबन्धुर्दीनदाता दीनो

द्धरणादिव्यधृक् ॥ २ ॥ दिव्यदेवो दिव्यरूपो दिव्यासनानिवासकः । दीर्घकेशो दीर्घपुच्छो दीर्घसूत्रोऽपि दीर्घभुक् ॥ ३ ॥ दीर्घदर्शी दूरदर्शी दीर्घबाहुस्तु दीर्घपः । दानवारिर्दरिद्रारिर्दैत्यारिर्दस्युभञ्जनः ॥ ४ ॥ दंष्ट्री दंडिर्दण्डधरो दण्डयो दण्डप्रदायकः । दामोदरप्रियो दत्तात्रेयपूजकतत्परः ॥ ५ ॥ दर्वीदलपतिर्दर्दुर्दर्द्दुरोगविनाशकः । धर्मो धर्माधिपो धर्मी धर्मशास्त्रपरायणः ॥ ६ ॥ धर्मात्मा धर्मनेता च धर्मधुग्धर्मधारकः । धर्मध्वजो धर्ममूर्तिः धर्मराजस्य त्रासकः ॥ ७ ॥ धाता ध्येयो धनो धन्यो धनदो धनपो धनी ।

धनदत्राणकर्ता च धनपप्रतिपालकः ॥ ८ ॥ धरणी
धराप्रियो धन्वी धनुष्मान्धनधारकः । धन्वी सवत्स
लोधीरो धाता मोदप्रदायकः ॥९॥ धात्रेशवरदाता
च धात्रेशप्रतिपूजकः । धात्रात्मा च धरानाथो धरा
नाथप्रबोधकः ॥ १० ॥ धार्मिष्ठो धर्मकेतुश्च धवलो
धवलप्रियः । धवलाबलवासी च धेनुदो धेनुपो धनी
॥ ११॥ ध्वनिरूपो ध्वनिप्राणो ध्वनिधर्मप्रबोधकः ।
धर्माध्यक्षो ध्वजो धूम्रो धातुरोधी विरोधकः॥ १२॥
नारायणो नरो नेता नदीशो नरवानरः । नदीसंक्र

मणो नाट्यो नाट्यवक्ता नटप्रियः ॥ १३ ॥ नारा

यणात्मको नन्दी नन्दी शृंगी गणाधिपः । नान्दिके
श्वरवर्त्मा च नन्दिकेश्वरपूजकः ॥ १४ ॥ नरसिंहो
नटी नर्मी नखयुद्धविशारदः । नखायुधो नलो
नीलो नलनीलप्रमोदकः ॥ १५ ॥ नवद्वारपुराधारो
नवद्वारपुरातनः । नरनारायणस्तुत्यो नखनाथमहे
श्वरः ॥ १६ ॥ नखदंष्ट्रायुधो नित्यो निराकारो निर
ञ्जनः । निष्कलङ्को निरवद्यो निर्मलो निर्ममो नगः
॥ १७ ॥ नगरग्रामपालश्च निरन्तरनगारिपः । नाग
कन्याभयध्वंसी नागारिप्रियनागरः ॥ १८ ॥
पीताम्बरः पद्मनाभः पुण्डरीकाक्षपावनः । पद्माक्षः

पद्मवक्त्रश्च पद्मासनप्रपूजकः ॥ १९ ॥ पद्ममाली
पद्मपरः पद्मपूजनतत्परः । पद्मपाणिः पद्मपादः पुण्ड
रीकाक्षपावनः ॥२०॥ पावनः पवनात्मा च पवनात्म
जपापहा । परःपरतरःपद्मःपरमःपरमात्मकः॥२१॥
पीतांबरप्रियः प्रेमप्रेमदः प्रेमपालकः । प्रौढः प्रौढ
तरः प्रेतदोषहा प्रेतनाशकः ॥२२॥ प्रभञ्जनान्वयः
पंचपञ्चाक्षरमनुप्रियः । पन्नगारिः प्रतापी च प्रपन्नपर
दोषहा ।२३। पराभिचारशमनः परसैन्यविनाशकः।
प्रतिवादिमुखस्तंभः पुराधारः पुरारिनुत् ॥ २४ ॥
पराजितः परब्रह्म परात्परपरात्परः । पातालगः पुरा

णश्च पुरातनप्लवंगमः ॥ २५ ॥ पुराणपुरुषः पूज्यः
पुरुषार्थप्रपूरकः । प्लवंगेशः पलाशोऽपि पृथुकः पृथि
वीपतिः ॥ २६ ॥ पुण्यशीलः पुण्यराशिः पुण्यात्मा
पुण्यपालकः । पुण्यकीर्तिः पुण्यगीतिः प्राणदः प्राण
पोषकः ॥ २७ ॥ प्रवीणश्च प्रसन्नश्च पार्थध्वजनिवा
सकः । पिङ्गकेशः पिंगरोमा प्रणवः पिंगलप्रणः ॥२८॥
पराशरः पापहर्ता पिप्पलाश्रयसिद्धिदः । पुण्य
श्लोकः पुरातीतः प्रथमः पुरुषः पुमान् ॥२९॥ पुराधा
रश्च प्रत्यक्षः परमेष्ठी पितामहः । फुल्लारविन्दवदनः
फुल्लत्कमललोचनः ॥३०॥ फूत्कारः फूत्करः फूश्च

फूदमंत्रपरायणः । स्फटिकाद्रिनिवासी च फुल्लेन्दी
वरलोचनः ॥ ३१ ॥ वायुरूपी वायुसुतो वाय्वात्मा
वामनाशकः । वनो वनचरो बालो बालत्राता तु बा
लकः ॥ ३२ ॥ विश्वेशो विश्वनाथश्च विश्वात्मा वि
श्वपालकः । विश्वधाता विश्वकर्ता विश्ववेत्ता विशां
पतिः ॥ ३३ ॥ विमलो विमलज्ञानो विमलानन्ददा
यकः । विमलोत्पलवक्त्रश्च विमलात्मा विलासकृत्
॥ ३४ ॥ बिन्दुमाधवपूजश्च बिन्दुमाधवसेवकः । बी
जोथ वीर्यदो बीजहारी बीजप्रदो विभुः ॥ ३५ ॥ विज
यो बीजकर्ता च विभूतिर्भूतिदायकः । विश्ववन्द्यो

विश्वगम्यो विश्वहर्ता विराट्तनुः ॥३६॥ तुलकारह
तारातिर्वसुदेवो वनप्रदः । ब्रह्मपुच्छो ब्रह्मपरो वानरो
वानरेश्वरः ॥ ३७ ॥ बलिबन्धनकृद्विश्वतेजा विश्व
प्रतिष्ठितः । विभोक्ता च वासुदेवो वीरवीरो वसुन्धरः
॥ ३८ ॥ वनमाली वनध्वंसी वारुणो वैष्णवो बली ।
बिभीषणप्रियो विष्णुसेवी वायुगतिर्विदुः ॥ ३९ ॥
विपन्नवायुवंशश्च वेदवेदाङ्गपारगः । बृहत्तनुर्बृहत्पा
दो बृहत्कायो बृहद्यशाः ॥४०॥ बृहन्नासो बृहद्बाहुर्बृ
हन्मूर्तिर्बृहत्स्तुतिः । बृहद्धनुर्बृहज्जंघो बृहत्कायो बृह
त्करः ॥४१॥ बृहद्गातिर्बृहत्पुच्छो बृहल्लोकफलप्रदः ।

बृहत्सेव्यो बृहच्छक्तिर्बृहद्विद्याविशारदः ॥ ४२ ॥ बृहल्लोकरतो विद्याविद्यादाता विदिक्पतिः । विग्रहो विग्रहरतो व्याधिनाशी च व्याधिदः ॥४३॥ विशिष्टो बलदाता च विघ्ननाशो विनायकः । वराहो वसुधानाथो भगवान्भवभंजनः॥४४॥भाग्यदो भयकर्ता च भगो भृगुपतिप्रियः। भव्यो भक्तो भरद्वाजो भयांघ्रिभयनाशनः ॥४५॥ माधवो मथुरानाथो मेघनादो महामुनिः । मायापतिर्मनस्वी च मायातीतो मनोत्सुकः ॥ ४६ ॥ मैनाकवन्दितामोदो मनोवेगीमहेश्वरः । मायानिर्जितरक्षाश्च मायानिर्जितवि

ष्टपः ॥ ४७ ॥ मायाश्रयश्च निलयो मायाविध्वंसको
मयः।मनोयमपरो याम्यो यमदुःखनिवारणः॥४८॥
यमुनातीरवासी च यमुनातीर्थचारणः । रामो राम
प्रियो रम्यो राघवो रघुनंदनः ॥४९॥ रामप्रपूजको
रुद्रो रुद्रसेवी रमापतिः । रावणारी रमानाथो व
त्सलो रघुपुङ्गवः ॥५०॥ रक्षोघ्नो रामदूतश्च रामेष्टो
राक्षसान्तकः । रामभक्तो रामरूपो राजराजो रणो
त्सुकः ॥५१॥ लंकाविध्वंसको लङ्कापतिघाती लता
प्रियः । लक्ष्मीनाथप्रियो लक्ष्मीनारायणात्मपालकः
॥५२॥ लवणाब्धिहेलकश्च लङ्केशगृहभञ्जनः । ब्रह्म

स्वरूपी ब्रह्मात्मा ब्रह्मज्ञो ब्रह्मपालकः ॥ ५३ ॥ ब्रह्म
वादी च विक्षेत्रं विश्वबीजं च विश्वधृक् । विश्वंभरो
विश्वमूर्तिर्विश्वाकारोऽथ विश्वधृक् ॥५४॥ विश्वात्मा
विश्वसेव्योऽथ विश्वो विश्वेश्वरो विदुः । शुक्तः शुक्त
प्रदः शुक्तः शुक्तात्मा च शुभप्रदः ॥५५॥ शर्वरीपति
शूरश्च शरभश्च श्रुतिश्रवाः। शाकंभरीशक्तिधरः शत्रु
घ्नः शरणप्रदः ॥५६॥ शङ्करः शान्तिदः शांतः शिवः
शूली शिवार्चितः । श्रीरामरूपः श्रीवासः श्रीपदः
श्रीकरः शुचिः ॥५७॥ श्रीशः श्रीदः श्रीकरश्च श्री
कान्तप्रियश्रीनिधिः । षोडशारसंयुतः षोडशा

त्मा प्रियंकरः ॥ ५८ ॥ षडंगस्तोत्रनिरतः षडानन प्रपूजकः । षट्शास्त्रवेत्ता षड्बाहुः षट्स्वरूपः षडूर्मिपः ॥ ५९ ॥ सनातनः सत्यरूपः सत्यलोकप्रबोधकः । सत्यात्मा सत्यदाता च सत्यव्रतपरायणः ॥ ६० ॥ सौम्यः सौम्यप्रदः सौम्यदृक्सौम्यः सौम्यपालकः । सुग्रीवादियुतः सर्वः संसारभयनाशनः ॥ ६१ ॥ सूत्रात्मा सूक्ष्मसंध्यश्च स्थूलः सर्वगतिः पुमान् । सुरभिः सागरः सेतुः सत्यः सत्यपराक्रमः ॥ ६२ ॥ सत्यगर्भः सत्यसेतुः सिद्धिस्तु सत्यगोचरः । सत्यवादी सुकर्मा च सदानंदैक ईश्वरः ॥ ६३ ॥

सिद्धिः साध्यः सुसिद्धिश्च संकल्पः सिद्धिहेतुकः।
सप्तपातालचरणः सप्तर्षिगणवन्दितः ॥६४॥ सप्ता
ब्धिलंघनो वीरः सप्तद्वीपोरुमण्डलः। सप्ताङ्गराज्य
सुखदः सप्तमातृनिषेवितः॥६५॥ सप्तच्छंदोविधिः
सप्तसप्तपातालसंश्रयः। संकर्षणः सहस्रास्यः सह
स्राक्षः सहस्रपात् ॥ ६६ ॥ हनुमान्हर्षदाता च हरो
हरिर्हरीश्वरः। क्षुद्रराक्षसघाती च क्षुब्धनः क्षान्तिदा
यकः॥ ६७ ॥ अनादीशो ह्यनन्तश्च आनन्दोऽध्या
त्मबोधकः। इंद्र ईशोत्तमश्चैव उन्मत्तऋषिऋद्धिदः
॥६८॥ तृवर्णी तृपदोपेत ऐश्वर्यऔषधीप्रियः।

औषधश्चांशुमांश्चैव अकारः सर्वकारणः ॥ ६९ ॥
इत्येतद्रामदूतस्य नाम्नां चैव सहस्रकम् । एककालं
द्विकालं वा त्रिकालं श्रद्धयान्वितः ॥ ७० ॥ पठना
त्पाठनाद्वापि सर्वसिद्धिर्भवेत्प्रिये । मोक्षार्थी लभते
मोक्षं कामार्थी काममाप्नुयात् ॥ ७१ ॥ विद्यार्थी
लभते विद्यां वेदव्याकरणादिकम् । इच्छाकामस्तु
कामार्थी धर्मार्थी धर्ममक्षयम् ॥ ७२ ॥ पुत्रार्थी ल
भते पुत्रं वरायुस्सहितं पुमान् । क्षेत्रं च बहुसस्यं
स्याद्गावश्च बहुदुग्धदाः ॥ ७३ ॥ दुःस्वप्नं च नृभि
र्दृष्टं सुस्वप्नमुपजायते । दुःखौघो नश्यते तस्य संप

त्तिर्वर्द्धतेचिरम् ॥ ७४ ॥ चतुर्विधं वस्तु तस्य भव त्येव न संशयः । अश्वत्थमूले जपतां नास्ति वैरि कृतं भयम् ॥ ७५ ॥ त्रिकालं पठनात्तस्य सिद्धिः स्यात्करसांस्थिता ।अर्धरात्रे रवौ धृत्वा कंठदेशे नरः शुचिः ॥ ७६ ॥ दशावर्तं पठेन्मर्त्यः सर्वान्कामान वाप्नुयात् । निशान्ते भौमे न्यग्रोधमूले स्थित्वा वि चक्षणः ॥ ७७ ॥ दशावर्त्तं पठेन्मर्त्यः सार्वभौमः प्र जायते । अर्कमूलेऽर्कवारे तु यो मध्याह्ने शुचिर्ज पेत् ॥७८ ॥ चिरायुः स सुखी पुत्री विजयी जायते क्षणात् । ब्राह्मे मुहूर्ते चोत्थाय प्रत्यहं च पठे

न्नरः ॥७९॥ यं यं कामयते कामं लभते तं न संशयः ।
संग्रामे सन्निविष्टानां वैरिविद्रावणं परम् ॥ ८० ॥
डाकिनीभूतप्रेतेषु ग्रहपीडाहरं तथा । ज्वरापस्मा
रशमनं यक्ष्मप्लीहादिवारणम् ॥८१॥ सर्वसौख्यप्रदं
स्तोत्रं सर्वसिद्धिप्रदं तथा । सर्वान्कामानवाप्नोति वा
युपुत्रप्रसादतः ॥ १८२ ॥ इतिश्रीहरिकृष्णविनिर्मि
ते बृ० ध० उपासनास्तबके हनुमदुपासनाध्याये
रुद्रयामलोक्तहनुमत्सहस्रनामस्तोत्रनिरूपणं नाम
सप्तदशं प्रकरणम् ॥ १७ ॥ श्लोकाः १११४ ॥ अथश्री
मद्धनुमत्स्तवराजः ॥ श्रीमद्विष्णवङ्घ्रिनिष्ठातिगुणगुरु

तमश्रीमदानन्दतीर्थत्रैलोक्याचार्य-पादोज्ज्वलजल
जलसत्पांसवोऽस्मान्पुनन्तु । वाचां यत्र प्रणेत्री त्रि
भुवनमहिता शारदा शारदेन्दुज्योत्स्नाभद्रास्मित
श्रीधवलितककुभा प्रेमभारं बभार॥ १॥उत्कंठाकुंठ
कोलाहलजवविदिताजस्रसेवानुवृद्ध-प्राज्ञात्मज्ञानधू
तान्धतमससुमनोमौलिरत्नावलीनाम् । भक्त्युद्रेकाव
गाढ-प्रघटनसघटात्कारसंघृष्यमाण-प्रांतप्राग्र्यांघ्रि
पीठोत्थितकनकरजःपिंजरारंजिताशाः॥२॥ जन्मा
धिव्याध्युपाधिप्रतिहतिविरहप्रापकाणां गुणानाम
ग्र्याणामर्पकाणांचिरमुदितचिदानन्दसंदोहदानाम्।

एतेषामेष दोषप्रमुषितमनसां द्वेषिणां दूषकाणां दैत्यानामार्त्तिमंधेतमासि विदधतां संस्तवे नास्ति शक्तः॥ ३॥ अस्याविष्कर्तुकामं कलिमलकलुषेऽस्मिञ्जने ज्ञानमार्गं वंद्यं चन्द्रेन्द्ररुद्रद्युमणिफणिवयोनायकाद्यैरिहाद्य। मध्वाख्यं मन्त्रसिद्धं किमुत कृतवतो मारुतस्यावतारं पातारं पारमेष्ठ्यं पदमपि विपदः प्राप्तुरापन्नपुंसाम्॥ ४॥ उद्यद्विद्युत्प्रचंडांनिजरुचिनिकरव्याप्तलोकावकाशो बिभ्रद्भीमोभुजेयोऽभ्युदितदिनकराभाङ्गदाढ्यप्रकांडे। वीर्योद्धार्यां गदाग्र्यामयमिह सुमतिं वायुदेवो विदध्यादध्यात्मज्ञाननेता

यतिवरमहितो भूमिभूषामणिर्मे॥५॥संसारोत्तापनि
त्योपशमदसदमयस्नेहहासांबुपूरप्रोद्यद्विद्यानवद्य
द्युतिमणिकिरणश्रेणिसम्पूरिताशः । श्रीवत्सांका
धिवासोचिततरसरलश्रीमदानन्दतीर्थक्षीरांभोधिर्वि
भिंद्याद्भवदनभिमतं भूरि मे भूतिहेतुः ॥६॥ मूर्धन्ये
षोऽञ्जलिर्मे दृढतरमिह ते बध्यते बन्धपाशच्छेत्रे दात्रे
सुखानां भजति भुवि भविष्यद्विधात्रे द्युभर्त्रे। अत्यं
तं संततं त्वं प्रदिश पदयुगे हंससंतापभाजामस्मा
कं भक्तिमेकां भगवत उत ते माधवस्याथ वायोः
॥७॥ साभ्रोष्णाभीषुशुभ्रप्रभमभयनभोभूरिभूभृ

द्धिभूतिभ्राजिष्णुभूंऋभूणां भवनमपि विभो भेदि बभ्रे बभूवे । येन भ्रूविभ्रमस्ते भ्रमयतु सुभृशं बभ्रुवद्दुर्भृताशान्भ्रांतिभेंदावभासास्त्वाति भयमभिभूर्भोक्ष्यतो मायिभिक्षून् ॥८॥ येऽमुं भावं भजन्ते सुरमुखसुजनाराधितं ते तृतीयं भासन्ते भासुरैस्ते सहचरचलितैश्चामरैश्चारुवेषाः । वैकुण्ठे कण्ठलग्नस्थिरशुचिविलसत्कांतितारुण्यलीलालावण्यापूर्णकांताकुचभरसुलभाश्लेषसंमोदसान्द्राः ॥ ९ ॥ आनन्दान्मन्दमन्दाददाति हि मरुतः कुन्दमन्दारनंद्यावर्त्तामोदान्दधाना मृदुपदमुदितोद्गीतकैः सुन्दरीणाम् । वृंदैरावं

घसुक्तेन्द्राहिमग्रुमदनाहीन्द्रदेवेन्द्रसेव्ये मौकुन्दे म
न्दिरेऽस्मिन्नविरतमुदयन्मोदिनां देवदेव ॥ १० ॥
उत्तपात्युत्कटात्विद्धप्रकटकटकटध्वानसंघट्टनोद्याद्वि
घुद्रचूढस्फुलिंगप्रकरविकिरणोत्काथितेबाधिताङ्गा
न् । उद्दाढं पात्यमाना तमसि तत इतः किङ्करैः प
ङ्क्लिे ते पंक्तिर्ग्रावणां गरिम्णा ग्लपयति हि भवद्वेषि
णो विद्धदाद्य ॥ ११ ॥ अस्मिन्नस्मद्गुरूणां हरिचर
णचिरध्यानसन्मङ्गलानां युष्माकं पार्श्वभूमिं धृतर
णरणिकस्वर्गिसेव्यां प्रपन्नः । यस्तूदास्ते स आस्ते
धिभवमसुलभक्लेशानिर्मोकमस्तप्रायानन्दं कथंचिन्न

वसति सततं पंचकष्टेतिकष्टे ॥ १२॥क्षुत्क्षामान्रूक्ष
रक्षोरदखरनखरक्षुण्णविक्षोभिताक्षानामग्नानन्धकूपे
क्षुरमुखमुखरैः पक्षिभिर्विक्षताङ्गान् । पूयासृङ्मूत्र
विष्ठाकृमिकुलकलिले तत्क्षणाक्षिप्तशक्त्याद्यस्त्रव्राता
र्दितांस्त्वाद्विष उपजिहते वज्रकल्पाजलौकाः ॥१३॥
मातर्मे मातरिश्वन्पितरतुलगुरो भ्रातरिष्टाप्तबन्धो
स्वामिन् सर्वांतरात्मन्नजरजरयितर्जन्ममृत्य्वामया
नाम् । गोविन्दे देहि भक्तिं भवति च भगवन्नूर्जितां
निर्निमित्तां निर्व्याजां निश्चलां सद्गुणगणबृहतीं शा
श्वतीमाशु देव ॥ १४ ॥ विष्णोरत्युत्तमत्वादखिल

गुणगणैस्तत्र भक्तिं गरिष्ठां संश्लिष्टे श्रीधराभ्यामत्रु
मथ परिवारात्मना सेवकेषु । यः सन्धत्ते विरिंचिश्व
सनविहगपानन्तरुद्रेन्द्रपूर्वेष्वाध्यायंस्तारतम्यं स्फुट
मवति सदावायुरस्मद्गुरुस्तम् ॥ १५ ॥ तत्त्वज्ञान्मु
क्तिभाजः सुखयसि हि गुरो योग्यतातारतम्यादाध
त्से मिश्रबुद्धींस्त्रिदिवनिरयभूगोचरान्नित्यबद्धान् ।
तामिस्रान्धादिकाख्ये तमसि सुबहुलं दुःखयस्यन्य
थाज्ञान्विष्णोराज्ञाभिरारित्थं श्रुतिशतमितिहासादि
चाकर्णयामः ॥ १६ ॥ वन्देहं तं हनूमानिति महित
महापौरुषो बाहुशाली ख्यातस्तेऽग्र्योऽवतारः सहित

इह बहुब्रह्मचर्यादिधर्मैः । सस्नेहानां सहस्वानहर हराहितं निर्दहन्देहभाजामंहो मोहापहोयः स्पृहय ति महतीं भक्तिमद्यापि रामे ॥ १७ ॥ प्राक्पंचाश त्सहस्रैर्व्यवहितममितं योजनैः पर्वतं त्वं यावत्संजी वनाद्यौषधानिधिमाधिकप्राणलङ्कामनैषीः । अद्राक्षी दुत्पतन्तं तत उत गिरिमुत्पाटयन्तं गृहीत्वा यातं खे राघवांघ्रौ प्रणतमपि तदैकक्षणे त्वां हि लोकः ॥ १८ ॥ क्षिप्तः पश्चात्सलीलं शतमतुलमतं योज नानां स उच्चस्तावद्विस्तारवांश्चाप्युपलल्व इव व्यग्रबुद्ध्या त्वयातः । स्वस्वस्थानास्थितातिस्थिर

शकलशिलाजालसंश्लेषनष्टच्छेदांकः प्रागिवाभूत्क
पिवरवपुषस्ते नमः कौशलाय॥ १९॥ दृष्ट्वा दुष्टाधि
पोरःस्फुटितकनकसद्धर्मघृष्टास्थिकूटं निष्पिष्टं हा
टकाद्रिप्रकटतटतटाकातिशंको जनोभूत् । येनाजौ
रावणारिप्रियनटनपटुर्मुष्टिरिष्टं प्रदेष्टुं किंनेष्टे मे स
तेष्टापदकटकतडित्कोटिभासृष्टकाष्ठः ॥ २० ॥ दे
व्यादेशप्रणीति-द्रुहिणहरवरावध्यरक्षोविघाताद्यासे
व्योद्यहयाद्रैः सहभुजमकरोद्रामनामा मुकुन्दः ।
दुष्प्रापे पारमेष्ठ्ये करतलमतुलं मूर्ध्नि विन्यस्य ध
न्यं तन्वन्भूयः प्रभूतप्रणयविकसिताब्जेक्षणस्त्वीक्ष

माणः ॥ २१ ॥ जघ्ने निघ्नेन विघ्नो बहलबलबकध्वंस
नाद्येन शोचद्विप्रानुक्रोशपाशैरसुविधृतिसुखस्यैक
चक्राजनानाम् । तस्मै ते देव कुर्मः कुरुकुलपतये
कर्मणा च प्रणामान्किर्मीरं दुर्मतीनां प्रथममथचयो
नर्मणानिर्ममाथ ॥ २२ ॥ निर्मृद्गन्नत्ययत्नं विजर
वरजरासंधकायास्थिसंधीन्युद्धे तं स्वध्वरे वा पशु
मिव दमयन्विष्णुपक्षाद्विडीशम् । यावत्प्रत्यक्षभूतं
निखिलमखभुजं तर्पयामासिथासौ तावत्यायोजि
तृप्त्या किमु वद भगवन्राजसूयाश्वमेधे॥२३॥क्ष्वेला
क्ष्णिणाट्टहास तवरणमरिहन्नुद्दोहामबाहो बहक्षौहि

ण्यनीकक्षपणसुनिपुणं यस्य सर्वोत्तमस्य । शुश्रूषा
र्थं चकर्थ स्वयमयमथ संवकुमानंदतीर्थश्रीमन्नाम
न्समर्थस्त्वमपि हि युवयोः पादपद्मं प्रपद्ये॥ २४ ॥
द्रुह्यंतीं हृद्गुहं मा द्रुतमनिलबलाद्द्रावयंतीमविद्यानि
द्रां विद्राव्य सद्योरचनपटुमथापाद्यविद्यासमुद्र ।
वाग्देवी सा सुविद्याद्रविणदाविदिताद्रौपदीरुद्रपत्न्या
द्युद्रिक्ताद्रागभद्राद्रहयतु दयितापूर्वभीमाज्ञया ते
॥२५ ॥ याभ्यां शुश्रुषुरासीः कुरुकुलजनने क्षत्रवि
प्रोदिताभ्यां ब्रह्मभ्यां बृंहिताभ्यां चितिसुखवपुषा
कृष्णनामास्पदाभ्याम् । निर्भेदाभ्यां विशेषाद्द्विवच

नविषयाभ्यासुभाभ्याममूभ्यां तुभ्यं च क्षेमदेभ्यः सरसिजविलसल्लोचनेभ्यो नमोऽस्तु ॥२६ ॥ गच्छन्सौगंधिकार्थं पथि स हनुमतः पुच्छमच्छस्य भीमः प्रोद्धर्त्तुं नाशकत्स त्वमुमुरुवपुषा भीषयामास चेति।पूर्णज्ञानौजसोस्ते गुरुतमवपुषोः श्रीमदानंदतीर्थ क्रीडामात्रं तदेतत्प्रमददसुधियां मोहकद्वेषभाजाम् ॥ २७ ॥ बर्ह्मिः कौटीरटीकः कुटिलकटुमतीनुत्कटाटोपकोपान् द्राक्च त्वं सत्वरत्वाच्छरणदगदया पोथयामासिथारीन् । उन्मथ्यातथ्यमिथ्यात्ववचनवचनानुत्पथस्थांस्तथान्यान् प्रायच्छः स्वप्रियायै

प्रियतमकुसुमं प्राण तस्मै नमस्ते ॥ २८ ॥ देहादु
त्क्रामितानामधिपतिरसतामक्रमाद्वक्रबुद्धिः क्रुद्धः
क्रोधैकवश्यः कृमिरिव मणिमान्दुष्कृतानिष्क्रयार्थं
म। चक्रे भूचक्रमेत्य क्रकचामिव सतां चेतसः कष्ट
शास्त्रं दुस्तर्कं चक्रपाणेर्गुणगणविरहं जीवतां चाधि
कृत्य ॥ २९ ॥ तद्दुष्प्रेक्षानुसारात्कतिपयकुनरैराद्द
तोऽन्यैर्विमृष्टो ब्रह्माहं निर्गुणोऽहं वितथमिदमिति
ह्येष पाषण्डवादः। तद्युक्त्याभासजालप्रसरविषतरू
द्दाहदक्षप्रमाणज्वालामालाधरोग्निः पवन विजयते
तेऽवतारस्तृतीयः ॥ ३० ॥ आक्रोशन्तो निराशा

भयभरविवशास्वाशयाश्छिन्नदर्पा वाशन्तो देशनाश
स्त्विति बत कुधियां नाशमाशाददाशु । धावन्तोऽ
श्लीलशीलावितथशपथशापाः शिवाः शान्तशौर्या
स्त्वद्व्याख्यासिंहनादे सपदि ददृशिरे मायिगोमाय
वस्ते ॥ ३१ ॥ त्रिष्वप्येवावतारेष्वरिभिरपघृणं हिं
सितो निर्विकारः सर्वज्ञः सर्वशक्तिः सकलगुणगणा
पूर्णरूपप्रगल्भः । स्वच्छः स्वच्छंदमृत्युः सुखयासि
सुजनं देव किं चित्रमत्र त्राता यस्य त्रिधामा जग
दुत वशगं किंकराः शंकराद्याः ॥ ३२ ॥ उद्यन्मंद
स्मितश्री-मृदुमधुमधुरालाप-पीयूषधारापूरा-सेकोप

शांतासुखसुजनमनोलोचनापीयमानम् । संद्रक्ष्ये
सुन्दरं संदुहदिह महदानन्दमानन्दतीर्थश्रीमद्वक्रेन्दु
बिंबं दुरितनुदुदितं नित्यदाहं कदा नु ॥३३॥ प्राची
नाचीर्णपुण्योच्चयचतुरतराचारतश्चारुचित्तानत्युच्चां
रोचयंतीं श्रुतिचितवचनान् श्रावकांश्चोद्यचंचून् ।
व्याख्यामुत्खातदुःखां चिरमुचितमहाचार्यचिंतार
तांस्तेचित्रासच्छास्त्रकर्त्तश्चरणपरिचरांच्छ्रावयास्मां
श्चकिंचित् ॥ ३४ ॥ पीठे रत्नोपक्लृप्ते रुचिररुचिमणि
ज्योतिषा सन्निषण्णं ब्रह्माणं भाविनं त्वां ज्वलति
निजपदे वैदिकाद्या हि विद्याः । सेवन्ते मूर्त्तिमत्यः सु

चरितचरितं भाति गंधर्वगीतं प्रत्येकं देवसंसत्स्वपि तव भगवन्नार्त्तितद्योवधूषु ॥ ३५ ॥ सानुक्रोशैरजस्रं जनिमृतिनिरयाद्यूर्मिमालाविलेऽस्मिन् संसाराब्धौ निमग्नाञ्छरणमशरणानिच्छतो वीक्ष्य जन्तून् । युष्माभिः प्रार्थितः सञ्जलनिधिशयनः सत्यवत्यां महर्षेर्व्यक्तिश्चिन्मात्रमूर्त्तिर्न खलु भगवतः प्राकृते जातु देहः ॥ ३६ ॥ अस्तव्यस्तं समस्तश्रुतिगुरुमधर्मै रत्नपूगं यथार्थैरर्थं लोकोपकॢप्त्यै गुणगणनिलयः सूत्रयामास कृत्स्नम् । योऽसौ व्यासाभिधानस्तमहमहरहर्भक्तितस्त्वत्प्रसादात्सद्यो विद्योपलब्ध्यै गुरुतममगुरुं देव

देवं नमामि ॥ ३७ ॥ आज्ञामन्यैरधार्यां शिरसि परिसर
द्रश्मिकोटीरकोटौ कृष्णस्याक्लिष्टकर्मा दधदनुसरणा
दर्थितो देवसंघैः । भूमावागत्य भूमन्नसुकरमकरोर्ब्र
ह्मसूत्रस्य भाष्यं दुर्भाष्यं यस्य दस्योर्मणिमत उदि
तं वेदसद्युक्तिभिस्त्वम् ॥ ३८ ॥ भूत्वा क्षेत्रे विशुद्धे
द्विजगणनिलये रौप्यपीठाभिधाने तत्रापि ब्रह्मजा
तिस्त्रिभुवनविशदे मध्यगेहाख्यगेहे । पारिव्रा
ज्याधिराजः पुनरपि बदरीं प्राप्य कृष्णं च नत्वा
कृत्वा भाष्याणि सम्यग्व्यतनुत च भवान् भारतार्थ
प्रकाशम् ॥ ३९ ॥ वन्दे तं त्वा सुपूर्णप्रमतिमनुदि

नासेवितं देववृन्दैर्वंदे वन्दारुमीशो श्रिय उत नियतं श्रीमदानंदतीर्थम् । वन्दे मन्दाकिनीसत्सरिदमल जलासेकसाधिक्यसंगं वन्देऽहं देवभक्त्या भवभयद हन सज्जनान्मोदयन्तम् ॥ ४० ॥ सुब्रह्मण्याख्यसूरेः सुत इति सुभृशं केशवानन्दतीर्थश्रीमत्पादाब्जभक्तः स्तुतिमकृत हरेर्वायुदेवस्य चास्य । तत्पादार्चादरेण ग्रथितमदलसन्मालया त्वेतया य संराध्यामुं नमंतिप्रततमतिगुणा मुक्तिमेते व्रजन्ति ॥ ४१ ॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् । वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिर

सा नमामि ॥४२॥ वायुर्भीमो भीमनादो महौजाः सर्वेषां च प्राणिनां प्राणभूतः । नास्यावृत्तिर्देहिनां देहपाते तस्माद्वायुर्देवदेवो विशिष्टः ॥ ४३ ॥ प्रथमो हनुमान्नाम द्वितीयो भीम एव च । पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः ॥ ४४ ॥ ब्रह्मांता गुरवः साक्षादिष्टं दैवं श्रियः पतिः । आचार्याः श्रीमदाचार्याः सन्तु मे जन्मजन्मनि ॥ ४५ ॥ ज्ञाने विरागे हरिभक्तिभावे धृतिस्थितिप्राणबलेषु योगे । बुद्धौ च नान्यो हनुमत्समानः पुमान्कदाचित्क्वच कश्चनैव ॥४६॥ वातेन कुंत्यां बलवान् सुजातः शूरस्तपस्वी

द्विषतां निहन्ता । सत्ये च धर्मे च रतः सदैव परा क्रमे शत्रुभिरप्रधृष्यः ॥ ४७ ॥ यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यल बहृतद्दर्शनीमित्थमेव निहितं देवस्य भर्गो महत् । वायोरामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुर्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥ ४८ ॥ महाव्याकरणांभोधिमन्थमानसमन्दरम् । कवयन्तं रामकीर्त्या हनुमन्तमुपास्महे ॥ ४९ ॥ मुख्यप्राणाय भीमाय नमो यस्य भुजांतरम् । नानावीरसुवर्णानां निकषाश्मायितं बभौ ॥ ५० ॥ स्वांतस्थानंतशय्याय पूर्णज्ञान

रसार्णसे। उत्तुंगवाक्तरंगाय मध्वदुग्धाब्धये नमः ॥ ५१ ॥ येनाहमिह दुर्मार्गाद्दुर्भृत्याभिनिवेशितः। सम्यक्छ्रीवैष्णवे मार्गे पूर्णप्रज्ञं नमामि तम् ॥ ५२॥ अनन्याश्चिंतयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ ५३ ॥ यः सर्वगुणसंपूर्णः सर्वदोषविवर्जितः। प्रीयतां प्रीत एवालं विष्णुर्मे परमः सुहृत् ॥ ५४ ॥ सूक्तिरत्नाकरे रम्ये मूलरामायणार्णवे। विहरन्तो महीयांसः प्रीयन्तां गुरवो मम ॥ ५५ ॥ हनुमानञ्जनीसूनुर्वायुपुत्रो महाबलः। रामेष्टः फाल्गुनसखः पिङ्गाक्षोऽमितवि

क्रमः ॥ ५६ ॥ उदधिक्रमणश्चैव सीतासन्देशकारकः । लक्ष्मणप्राणदाता च दशग्रीवस्य दर्पहा ॥ ५७ ॥ मारुतिः पाण्डवो भीमो गदापाणिर्वृकोदरः । कौन्तेयः कृष्णदूतश्च भीमसेनो महाबलः ॥ ५८ ॥ जरासन्धान्तको वीरो दुःशासनविनाशनः । पूर्णप्रज्ञो ज्ञानदाता मध्वोध्वस्तदुरागमः ॥ ५९ ॥ तत्त्वज्ञो वैष्णवाचार्यो व्यासशिष्यो यतीश्वरः । शुभतीर्थाभिधानश्च जितामित्रो जितेन्द्रियः ॥ ६० ॥ श्रीमदानन्दसन्नाम्नामेवं द्वादशकं जपेत् । लभते वैष्णवीं भक्तिं गुरुभक्तिसमन्विताम् ॥ ६१ ॥ बुद्धिर्बलं यशो

धैर्यं निर्भयत्वमरोगता । अजाड्यं वाक्पटुत्वं च हनुमत्स्मरणाद्भवेत् ॥ ६२ ॥ इति श्रीहरिकृष्ण विनिर्मिते बृ० ध० उपासनास्तबके हनुमदुपासना ध्याये त्रिविक्रमपंडिताचार्यविरचितहनुमत्स्तवरा जनिरूपणं नामाष्टादशं प्रकरणम् ॥ १८॥ श्लोकाः ११७३ ॥ अथ हनुमतः शत्रुञ्जयस्तोत्रम् । ॐ ऐं श्रीं ह्रां ह्रीं ह्रंह्रस्फ्रें ह्स्रौं ख्फ्रें ह्स्ख्फ्रें ह्सौं ह्रां हनुम ते त्रैलोक्याक्रमणपराक्रम श्रीरामभक्त मम परस्य च सर्वशत्रूंश्चतुर्वर्णसंभवान् पुंस्त्रीनपुंसकान् भूतभवि ष्यद्वर्तमानान्दूरस्थ-समीपस्थानानानामधेयान्नाना

संकरजातीयान्कलत्रपुत्रमित्रभृत्यबंधुसुहृत्समेतान्
प्रभुशक्तिसमेतान्धनधान्यादिसंपत्तियुतान्राज्ञो राज
पुत्रसेवकान्मंत्रिसचिवसखीनात्यंतिकान्क्षणेन त्वर
या एतद्दिनावधि नानोपायैर्मारय २ शस्त्रैश्छेदय २
अग्निना ज्वालय २ दाहय २ अक्षकुमारवत्पादत
आक्रमणेन शिलातले त्रोटय २ घातय २ बंधय २
भ्रामय २ भयातुरान्विसंज्ञान्सद्यः कुरु २ भस्मीभूता
नुद्धूलय २ भक्तजनवत्सलसीताशोकापहारक सर्वत्र
मामेनं च रक्ष २ महारुद्रावतार हांहांहुंहुं भूतसंघैः
सह भक्षय २ क्रुद्धचेतसा नखैर्विदारय २ दशाद

स्मादुच्चाटयोच्चाटय पिशाचवङ्कंशय २ घेघेहुं फट्
स्वाहा ॥ १ ॥ ॐ नमो भगवते महाबलपराक्रमाय
महाविपत्तिनिवारणाय भक्तजलमनःकल्पनाकल्प
द्रुमाय दुष्टजनमनोरथस्तंभनाय प्रभंजनप्राणप्रिया
य श्रीम् ॥ २ ॥ अथध्यानम्–श्रीमंतं हनुमन्तमा
त्तारिपुभिद्भूभृत्तरुभ्राजितं वल्गद्वालधिबद्धवैरिनिच
यं चामीकराद्रिप्रभम् । रोषाद्रक्तपिशङ्गनेत्रनलिनं
भ्रूभङ्गमङ्गस्फुरत्प्रोद्यच्चंडमयूखमंडलमुखं दुःखापहं
दुःखिनाम् ॥ १ ॥ कौपीनं कटिसूत्रमौंज्याजिनयु
ग्देहं विदेहात्मजाप्राणाधीशपदारविन्दनिहितस्वांतं

कृतान्तं द्विषाम् । ध्यात्वैव समराङ्गणस्थितमथानी य स्वहृत्पङ्कजे संपूज्याखिलपूजनोक्तविधिना सं प्रार्थयेत्प्रार्थितम् ॥२॥ इति ध्यात्वा । हनुमन्नंजनी सूनो महाबलपराक्रम । लोलल्लांगूलपातेन ममारा तीन्निपातय ॥ १ ॥ मर्कटाधिप मार्तण्डमण्डलग्रास कारक । लोलल्लां० ॥ २ ॥ अक्षक्षपणपिङ्गाक्षक्षिति जाशुग्विनाशन । लोलल्लां० ॥ ३ ॥ रुद्रावतार सं सारदुःखभारापहारक । लोलल्लां० ॥ ४ ॥ श्रीराम चरणाम्भोजमधुपायितमानस । लोलल्लां० ॥ ५ ॥ वालिकालरदक्रांतसुग्रीवोन्मोचनप्रभो । लोलल्लां०

॥ ६ ॥ सीताविरहवारीशमग्नसीतेशतारक । लोल
ह्लां० ॥७॥ रक्षोराजप्रतापाग्निदह्यमानजगद्धन । लो
लह्लां० ॥८॥ ग्रस्ताशेषजगत्स्वास्थ्यराक्षसांभोधिम
न्दर। लोलह्लां० ॥९॥ पुच्छगुच्छस्फुरद्धूमानलदग्धा
रिपत्तन । लोलह्लां० ॥१०॥ जगन्मनोदुरुल्लंघ्यपारा
वारविलंघन । लोलह्लां० ॥ ११ ॥ स्मृतमात्रसमस्तेष्ट
पूरक प्रणतप्रिय । लोलह्लां० ॥ १२ ॥ रात्रिंचरच
मूराशिकर्त्तनैकविकर्त्तन । लोलह्लां० ॥ १३ ॥
जानकीजानकीजानिप्रेमपात्रपरन्तप । लोलह्लां०
॥ १४ ॥ भीमादिकमहावीरवीरवेशावतारक । लो

लल्लां०॥१५॥वैदेहीविरहक्लान्तरामरोषैकविग्रह। लो
लल्लां० ॥१६॥ वज्राङ्गनखदंष्ट्रेशवज्रिवज्रावगुंठन ।
लोलल्लां० ॥१७॥ अखर्वगर्वगंधर्वपर्वतोद्भेदनस्वर ।
लोलल्लां० ॥ १८ ॥ लक्ष्मणप्राणसंत्राण त्राततीक्ष्ण
करान्वय । लोलल्लां० ॥ १९ ॥ रामादिविप्रयोगार्त्त
भरताद्यार्त्तिनाशन । लोलल्लां० ॥ २० ॥ द्रोणाचल
समुत्क्षेपसमुत्क्षिप्तारिवैभव । लोलल्लां० ॥२१॥ सी
ताशीर्वादसंपन्नसमस्तावयवाक्षत । लोलल्लां०॥२२॥
इत्येवमश्वत्थतलोपविष्टः शत्रुंजयं नाम पठेत्स्वयं
यः । स शीघ्रमेवास्तसमस्तशत्रुः प्रमोदते मारुतज

प्रसादात् ॥२३॥ इति श्रीहरि० बृ० ध० उपासना स्तबके हनुमदुपासनाध्यायेशत्रंजयहनुमत्स्तोत्रनिरूपणं नामैकोनविंशं प्रकरणम् ॥ १९ ॥ ॥ श्लोकाः ११९६ ॥ अथ द्वितीयं हनुमत्स्तोत्रम् ॥ विप्रादयो जनगणाः स्तवनं प्रचक्रुर्ब्रह्मस्वरूप जगतां परिपालकस्य । रामप्रभावबलपूरितरुद्रमूर्त्तेः श्रीरामदूत सततं हनुमन्नमस्ते ॥ १ ॥ श्रीरामदूत शरणागतदीनबंधो वज्राङ्गदहकरुणाकररुद्रमूर्त्ते । श्रीरामराम इति जापकृतात्मशक्ते श्रीरामदूत सततं हनुमन्नमस्ते ॥ २ ॥ सिन्दूरतैलाचितातिविभूषमाणलांगूल

ताडनकृतासुरसंगनाश । क्रोधाद्दशाननपुरीदहनप्र
कारिञ्छ्रीरामदूत सततं हनुमन्नमस्ते ॥ ३ ॥ रामा
रिणा कृतहतौजनकात्मजायालंकास्थिताजनकजे
विसुशोधकारिन् । सीतातिशोकहरणप्रबलारिहन्तः
श्रीरामदूत सततं हनुमन्नमस्ते ॥ ४ ॥ संमूर्च्छिताङ्गवि
भुलक्ष्मणसौख्यकारिन्नौद्राङ्गदीर्घं हनुमन्नगहस्तधा
रिन् । दुष्टासुराहिमहिरावणनाशकारिञ्छ्रीरामदूत
सततं हनुमन्नमस्ते ॥ ५ ॥ शैलीगदाधरसमार्जितव
ज्रकच्छिन्वामांघ्रिपीडितमनोजसुलब्धकीर्त्ते । हे मा
रुते भवसमस्तभयार्त्तिहारिन् श्रीरामदूत सततं हनु

मन्नमस्ते ॥ ६ ॥ विप्रादिजातिकनिकेतननारिचाना
ग्रामाधिवासकृतधामविशालकीर्त्तें । श्रीरामदास दृ
ढबुद्धिमतां वरिष्ठ श्रीरामदूत सततं हनुमन्नमस्ते
॥७॥ फल्गूनदीतटसमुद्भवजालिवृक्षे प्रासादमंडित
मनोहरवासधाम्नि । रूपं विभाति कपिराजमनोहरं
ते श्रीरामदूत सततं हनुमन्नमस्ते ॥ ८ ॥ शुक्लाशु
भाद्रपदमासभवा द्वितीया भाति त्वदीयहवनोत्सव
जातहर्षा । यात्रालुसंघराजिताजनवीथिकात्र श्रीरा
मदूत सततं हनुमन्नमस्ते ॥ ९ ॥ जन्मादिहीनपव
नांजनिकात्तदेह श्रीजानकीपतिमनोजवदीप्तकान्ते ।

नानाकपीन्द्रचमुनायक ब्रह्मचारिञ्छ्रीरामदूत सततं हनुमन्नमस्ते ॥ १० ॥ लांगूलधारकजितेन्द्रियवायुपुत्र षट्पंचहस्तराचितध्वजदीर्घमान । श्रीरामसेवनपरेण सदोर्ध्वकाय श्रीरामदूत सततं हनुमन्नमस्ते ॥ ११ ॥ हे पावनेय जनरक्षक रामभक्त राजीवलोचनविशालसुभालधारिन् । दीर्घार्कस्त्रग्धरजटामुकुटादिधारिञ्छ्रीरामदूत सततं हनुमन्नमस्ते ॥ १२ ॥ आवाहनादिशुभषोडशकोपचारास्तुभ्यं निवेदनकृता हनुमन्मया ये । अङ्गीकुरुष्व भगवन्हनुमन्महेश श्रीरामदूत सततं हनुमन्नमस्ते ॥ १३॥ रोगान्विना

शय रिपूनथ विघ्नजालं तापत्रयं यमभयं भवपापसंघ
म् । दुःखानि नाशय विनाशय रिष्टकष्टं श्रीरामदूत
सततं हनुमन्नमस्ते ॥ १४॥ हे भक्तवत्सल विभो भग
वन्दयालो पुत्रान्यशांसि खलु देहि धनानि देहि । जा
यासुभाग्यकगवादिसुखानि देहि श्रीरामदूत सततं
हनुमन्नमस्ते ॥ १५ ॥ न्यूनातिरिक्तभवदोषचयं क्ष
मस्व पूजां गृहाण सकलां स्तुतिपाठयुक्ताम् । देव प्र
सीद भगवन् हनुमन् कृपालो श्रीरामदूत सततं हनु
मन्नमस्ते॥ १६॥वाक्पूजनं त्वयि समर्पितमेव भक्त्या
दोषान्विहाय सकलान् खलु तत्र संस्थान् । सम्य

ग्गृहाण सुगुणानिव राजहंसः श्रीरामदूतसततं हर सङ्कटं मे॥ १७॥ इति श्रीहरिकृष्णविनिर्मिते बृ० ध० उपासनास्तबके हनुमदुपासनाध्याये हनुमत्स्तोत्रं नाम विंशं प्रकरणम्॥२०॥ श्लोकाः १२१३ ॥ अथ हनुमदुपनिषद्॥ आथर्वणवेदे त्रिपंचाशत्तमम् ॥ ॐ सनकादियोगीन्द्रा अन्ये च ऋषयस्तथा। प्रह्लादाद्या विष्णुभक्ता हनुमन्तमिदं जगुः ॥१ ॥ वायुपुत्र महाबाहो किं तत्त्वं ब्रह्मवादिनाम् । पुराणेष्वष्टादशसु स्मृतिष्वष्टादशस्वपि ॥२॥ चतुर्वेदेषु शास्त्रेषु विद्यास्वाध्यात्मिकेषु च । सर्वेषु विबुधाद्येषु विघ्नसूर्येषु

शक्तिषु ॥ ३ ॥ एतेषु मध्ये किं तत्त्वं कथयस्व महा
बल । हनुमानुवाच ॥ भो भो योगीन्द्रा ऋषयो वि
ष्णुभक्तास्तथैव च ॥ ४ ॥ शृणुध्वं मामकीं वाचं भव
बन्धविनाशिनीम् । एतेषु चैव सर्वेषु तत्त्वं च ब्रह्मता
रकम् ॥ ५ ॥ राम एव परं ब्रह्म राम एव परं तपः ।
राम एव परं तत्त्वं श्रीरामो ब्रह्मतारकम् ॥ ६ ॥ वायु
पुत्रेणोक्ता योगीन्द्रा ऋषयो विष्णुभक्ताः पुनः पप्र
च्छुर्हनुमन्तं रामस्याङ्गानि तानि नो ब्रूहीति हनुमान्
स होवाच ॥ वायुपुत्रो विघ्नशक्तिदुर्गाक्षेत्रपालसूर्यरुद्र
नारायणनारसिंहवासुदेववाराहमन्त्रानन्यान् कां

श्रितसर्वान्मत्रान् श्रीसीतालक्ष्मणहनुमद्भरतशत्रुघ्न बिभीषणसुग्रीवाङ्गदजाम्बवत्प्रणवमन्त्रा रामस्याज्ञाभिजनितास्तान्विना रामो विघ्नकरो भवति ॥ पुनर्वायुपुत्रेणोक्तास्ते पुनर्हनुमन्तं पप्रच्छुरांजनेय महाबल विप्राणां गृहस्थानां प्रणवाधिकारः कथं स्यादिति पुनरुवाच हनुमान् ॥ अयोध्यानगरेरम्येसमासीनो रामो मया पृष्टः सीतापते योगीन्द्रमानसहंस विप्रगृहस्थानां प्रणवाधिकारं कथं स्यादिति सहोवाच॥ रामो येषां मे षडक्षराधिकारा वर्तन्ते तेषां प्रणवाधिकारः स्यान्नान्येषां प्रणवस्य केवलमकारोकारम

कराद्धंमात्रासहितस्य साह्येन यो राममंत्रं जपति त
स्याभयकरोऽहं स्याम् तस्मात्प्रणवस्याकारस्य चोका
रस्य च मकारस्य चार्द्धमात्रासहितस्य ऋषिच्छंदो
देवता तत्त्ववर्णावस्थानस्वरवेदाद्यनुच्चार्य न्यासं
कृत्वा प्रणवं मन्मंत्राद्विगुणं जप्त्वा पश्चाद्राममंत्रमाद्य
तः प्रणवं यो जपेत्स रामो भवेदिति रामेणोक्तं तस्मा
द्रामाङ्गं प्रणवः कथित इति वायुपुत्रेणोक्ताः पुनर्हनुम
न्तंपप्रच्छुः । रामभक्तबिभीषणकृतस्य रामपरिचर्यां
श्रोतुमिच्छामः । सहोवाच ॥ हनुमान् विभीषणोक्त
रामचर्यायां सप्तसहस्राणिसंस्कृतवाक्यानिसप्तसह

स्राणिगद्यानि पञ्चशतान्यार्या अष्टौ सहस्राणि श्लोकाश्चतुर्विंशतिसहस्राणि पद्यानि दशसहस्राणि दण्डका इत्येवमनुक्रमं ज्ञात्वा कृतकृतत्यो भवेदिति ॥ १ ॥ इति श्रीहरिकृष्ण० बृ० ध० उपासनास्तबके हनुमदुपासनाध्याये हनुमदुपनिषन्निरूपणं नामैकविंशं प्रकरणम् ॥ २१ ॥ अथपंचरत्नस्तोत्रम् ॥ शंशंशंसिद्धिनाथं प्रणमति चरणं वायुपुत्रं च रौद्रं वंवंवंविश्वरूपं हहहहहासितं गर्जितं मेघछत्रम् । तंतंत्रैलोक्यनाथं तपतिदिनकरं तं त्रिनेत्रस्वरूपं कंकंकंदर्पवश्यं कमलमनहरं शाकिनीकालरू

पम्॥१॥ रंरंरंरामदूतंरणगजदमितं रावणच्छेददक्षं बंबंबंबालरूपं नतगिरिचरणं कंपितं सूर्यबिंबम्। मं मंमंमंत्रसिद्धिंकापिकुलतिलकं मर्दनं शाकिनीनां हुं हुंहुंकारबीजं हनतिहनुमतं हन्यते शत्रुसैन्यम्॥२॥ दंदंदंदीर्घरूपं धरकरशिखरं पातितं मेघनादं ऊंऊं उच्चाटितं वै सकलभुवतलं योगिनीवृन्दरूपम्। क्षक्षं क्षंक्षिप्रवेगं क्रमति च जलधिं ज्वालितं रक्षदुर्गं क्षेंक्षेंक्षें क्षेमतत्वं दनुरुहकुलकं मुच्यते बिम्बकारम् ॥ ३ ॥ कंकंकंकालदुष्टं जलनिधितरणं राक्षसानां विनाशे दक्षं श्रेष्ठं कवीनां त्रिभुवनचरतां प्राणिनां प्राणरूपम्।

हौंह्रांह्रांह्रासतत्त्वं त्रिभुवनरचितं दैवतं सर्वभूते दे
वानां च त्रयाणां फणिभुवनधरं व्यापकं वायुरूपम्
॥ ४ ॥ त्वंत्वंत्वंवेदतत्त्वं बहुऋचयजुषां सामचाथ
र्वरूपं कंकंकंकंदने त्वं ननु कमलतले राक्षसान् रौ
द्ररूपान् । खंखंखंखड्गहस्तं झटिति भुवतले त्रोटितं
नागपाशं ॐ ॐ ॐ काररूपं त्रिभुवनपठितं वेद
मन्त्राधिमन्त्रम् ॥ ५ ॥ संग्रामे शत्रुमध्ये जलनिधि
तरणे व्याघ्रसिंहे च सर्पे राजद्वारे च मार्गे गिरिगु
हविवरे चोषरे कन्दरे वा। भूतप्रेतादियुक्ते ग्रहगण
विषये शाकिनीडाकिनीनां देशे विस्फोटकानां ज्वर

वमनाशिरः पीडने नाशकस्त्वम् ॥ ६ ॥ इतिश्रीहरि
कृष्णवि० बृ० ध० उपासनास्तबके हनुमदुपासना
ध्याये हनुमत्पञ्चरत्नस्तोत्रनिरूपणं नाम द्वाविंशं
प्रकरणम् ॥ २२ ॥ श्लोकाः १२१९ ॥ अथांजनेया
स्त्रम् ॥ सुदर्शनसंहितायाम्–अधुना गिरिजानन्द
आञ्जनेयास्त्रमुत्तमम् । समन्त्रं सप्रयोगं च वद मे प
रमेश्वर ॥ १ ॥ ईश्वर उवाच ॥ ब्रह्मास्त्रं स्तंभकाधारि
महाबलपराक्रमम् । मन्त्रोद्धारमहं वक्ष्ये शृणु त्वं
परमेश्वरि ॥ २ ॥ आदौ प्रणवमुच्चार्य मायामन्मथ
वाग्भवम् । शक्तिवाराहबीजं च वायुबीजमनन्त

रम्॥ ३ ॥ विषयं द्वितयं पश्चाद्वायुबीजमनन्तरम् ।
ग्रसयुग्मं पुनर्वायुबीजंचोच्चार्यं पार्वति ॥ ४॥ स्फु
रयुग्मं वायुबीजं प्रस्फुरद्वितयं पुनः । वायुबीजं
ततोच्चार्यं हुंफट्स्वाहासमन्वितम् ॥५ ॥ आंजनेया
स्त्रमनघे पञ्चपञ्चदशाक्षरम् । कालरुद्रो ऋषिः प्रोक्तो
गायत्रीछंद उच्यते ॥ ६ ॥ देवता विश्वरूपश्रीवायु
पुत्रः कुलेश्वरि । हुंबीजं कीलकं ग्लौं च ह्रींकारं शक्ति
मेव च ॥ ७ ॥ प्रयोगं सर्वकार्येषु चास्त्रेणानेन पार्व
ति । विद्वेषोच्चाटनेष्वेव मारणेषु प्रशस्यते ॥ ८ ॥
अस्य श्रीहनुमदांजनेयास्त्रविद्यामन्त्रस्य कालरुद्र

ऋषिः गायत्रीछंदः विश्वरूपश्रीवायुपुत्रो देवता। हूंबीजम्। ग्लौंकीलकम्। ह्रींशक्तिः। मम शत्रुनिग्रहार्थं हनुमन्मन्त्रजपे विनियोगः। मन्त्रप्रकाशः—ॐ ह्रीं क्लींऐंसौंग्लौंयंशोषय २ यं ग्रस २ यं विदारय २ यं भस्मीकुरु २ यं स्फुर २ यं प्रस्फुर २ यं सौंग्लौंहुंफट्स्वाहा। नामद्वयं समुच्चार्य मन्त्रादौ कुलसुन्दरि। प्रयोगेषु तथान्येषु सुप्रशस्तो ह्ययं मनुः ॥ ९ ॥ आदौ विद्वेषणं वक्ष्ये मन्त्रेणानेन पार्वति। काकोलूकदलग्रन्थी पवित्रीकृतबुद्धिमान् ॥ १० ॥ तर्पयेच्छतवारं तु निशिदिनाद्द्वेषमानुयात्। ईदृशंकर्मामिदं म

न्त्रं मन्त्रांते त्रिशतं जपेत् ॥ ११ ॥ वासिष्ठारुन्धतीभ्यां च भवेद्विद्वेषणं प्रिये । महाद्विद्वेषणं भूत्वा कुरु शब्दं विना प्रिये ॥ १२ ॥ मन्त्रं त्रिशतमुच्चार्यं नित्यं मे कलहाप्रिये । ग्राहस्थाने ग्रामपदे उच्चार्याष्टशतं जपेत् ॥ १३ ॥ ग्रामान्योन्यं भवेद्वैरमिष्टलाभो भवेत्प्रिये । देशशब्दं समुच्चार्य द्विसहस्रं जपेन्मनुम् ॥ १४ ॥ देशो नाशं समायाति अन्योन्यं क्लेशमेव च । रणशब्दं समुच्चार्य जपेदष्टोत्तरं शतम् ॥ १५ ॥ अग्रौ नता तदा वायुदिनान्ते कलहो भवेत् । उच्चाटनप्रयोगं च वक्ष्येऽहं तव सुव्रते ॥ १६ ॥ उच्चाटनप

दांतंच अस्त्रमष्टोत्तरं शतम् । तर्पयेद्धानुवारेभ्यो निशायां लवणांबुना ॥ १७ ॥ त्रिदिनादिकमन्त्रांते उच्चाटनमथो भवेत् । भौमे रात्रौ तथा नग्नो हनुमन्मूलमृत्तिकाम् ॥ १८ ॥ नग्नेन संग्रहीत्वा तु स्पृष्ट्वा चाष्टोत्तरं जपेत् । समांसं च प्रेतभस्म शल्यचूर्णं समांशकम् ॥ १९ ॥ यस्य मूर्ध्नि क्षिपेत्सद्यःकाकवद्भ्रमेत महीम् । विप्रचाण्डालयोः शल्यं चिताभस्म तथैव च ॥ २० ॥ हनुमन्मूलमृद्ग्राह्या बध्वा प्रेतपटेन तु । गृहे वा ग्राममध्ये वा पत्तने रणमध्यमे ॥ २१ ॥ निक्षिपेच्छत्रुगतेषु सद्यश्चोच्चाटनं भवेत् । तडागे स्था

पायित्वा तु जलदारिद्र्यमाप्नुयात् ॥ २२ ॥ मारणं संप्रवक्ष्यामि तवाहं शृणु सुव्रते । नरास्थिलेखनीं कृत्वा चिताङ्गारं च कज्जलम् ॥ २३ ॥ प्रेतवस्त्रे लिखेदस्त्रं गर्तं कृत्वा समुत्तमम् । श्मशाने निखनेत्सद्यः सहस्त्राद्रिपुमारणे ॥ २४ ॥ न कुर्याद्विप्रजातिभ्यो मारणं मुक्तिमिच्छता । देवानां ब्राह्मणानां च गवां चैव सुरेश्वरि ॥ २५ ॥ उपद्रवं न कुर्वीत द्वेषबुद्ध्या कदाचन । प्रयोक्तव्यं तथान्येषां न दोषो मुनिरब्रवीत् ॥ २६ ॥ इति श्रीहरि० बृ० ध० उपासनास्तबके हनुमदुपासनाध्याये आंजनेयास्त्रनिरूपणं नाम

त्रयोविंशं प्रकरणम् ॥ २३ ॥ श्लो० १२४९॥ अथ हनुमदघोरास्त्रम् ॥ अथर्वणरहस्ये–अस्य श्रीअनंतघोरप्रलयज्वालाग्निरौद्र-वीरहनुमदसाध्य-साधनाघोरास्त्रमहामन्त्रस्य ईश्वर ऋषिः । अनुष्टुप्छंदः श्रीरामलक्ष्मणौ देवता । नानाछन्दांसि । मारुतात्मजेति बीजम् अञ्जनीसूनुरिति शक्तिर्वायुपुत्र इति कीलकं श्रीहनुमत्प्रसादसिद्ध्यर्थे जपे विनियोगः । ॐनमो भगवते दावानलकालाग्निरुद्र हनुमंस्तेजोवितानधवलीकृतजगत्त्रितयवज्रदेहवज्रकायवज्रांगवज्रनखवज्रमुखवज्रबाहुवज्ररोमवज्रनेत्रवज्रदंतवज्रकरकमलभा

स्कराय भीमकरपिङ्गलाक्षोद्यत्प्रलयकालरौद्रवीरभ
द्रावतारशरभशाल्वभैरवदोर्दण्डलङ्कापुरीदहन उद
धिलंघन दशग्रीवशिरःकृतान्त सीताश्वासन ईश्वर
पुत्रवायुसुत अञ्जनीगर्भसंभूत उदयभास्करबिंबान
लग्रासक देवदानवऋषिमुनिवरदायक पाशुपतास्त्र
ब्रह्मास्त्र-वैष्णवास्त्र-नारायणास्त्र-कालशक्तिकालदण्ड
कालपाशाघोरास्त्रनिवारणाय नारायणास्त्रमृडाय स
र्वशक्तिमयात्मकाय परविद्यानिवारणाय अग्निदीप्ता
य अथर्वणवेदसिद्धिस्थिरकाल निराहार वायुवेगम
नोवेगश्रीरामतारकपरब्रह्मविश्वरूपनिरञ्जन लक्ष्मण

प्राणप्रतिष्ठानन्दकर जलस्थलाग्निमर्ममनो भेदि २
सर्वशत्रूञ्छेदि २ मम वैरिणः खादय २ मां संजीवय २
पर्वतो-त्पाटनाय सुग्रीवसाधारण-निष्कलङ्कितकु
मारब्रह्मचारिन् दिगम्बरसर्वपापग्रहकुमारग्रहसर्वग्र
हाञ्छेदय २ भेदय २ भिन्धि २ खादय २ कंटकांस्ता
डय २ मारय २ शोषय २ ज्वालय २ हयदेवदैत्यान्ना
शय २ अतिशोषय २ सर्वत्र मां रक्षय २ शाकिनीडा
किनीर्विध्वंसय २ हनुमन्ताय मम रक्ष २ ॐ ह्रांह्रींफट्
स्वाहा ॥ १ ॥ ॐ नमोभगवते श्रीप्रतापहनुमंताय



महावीराय सर्वदुःखविनाशनाय ग्रहमण्डलभूतम

ण्डलप्रेतमण्डलपिशाचमण्डलोच्चाटनाय अन्तरभ
वान्दिकज्वरमाहेश्वरज्वरवैष्णवज्वरब्रह्मज्वरविषम
ज्वरशीतज्वरवातज्वरऐकाहिक-द्व्याहिकत्र्याहिक
चातुर्थिकार्द्धमासिकमासिकषाण्मासिकसांवत्सरि
कवातपित्तश्लेष्मसान्निपातिकान्तर्गतापस्मारि कभ्र
मिकज्वराञ्छेदय२ भेदय२ ह्रीं फट् स्वाहा।२। ॐ नमो
भगवते चिन्तामणिहनुमते अंगशूलाक्षिशूलशिरः
शूलो-दरशूलकर्ण-शूलहस्तशूलगुदशूल·कटिशूलजं
घाशूलपादशूल--पित्तशूलवातशूलादि--सर्वरोगाच्छू
लान्निर्मूलय २ दानवदैत्यकामिनीवेतालब्रह्मराक्षस

कालानलनागपाशानन्तवासुकितक्षककर्कोटकशङ्ख
कुलिकपद्ममहापद्मकुमुदज्वलस्थरोग-पाश-महाना
गिनीकालपाशविषं निर्विषं कुरु २ स्वाहा ॥३॥ ॐ
पातालगरुडहनुमन्तभैरवाय नमो गजसिंहेन्द्रारि
पाशबन्धं छेदय २ प्रलयमारुतकालाग्निहनुमते शृं
खलाबन्धं मोक्षय २ सर्वबालग्रहं छेदय २ सर्व
कार्याणि साधयरमारणमोहनघृणिं मर्दयरमारयर
वानराय मम प्रसन्न श्रीरामरक्षासिंहभैरवस्वरूप
ॐ द्रांद्रींक्षौंभैंघ्रांश्रींक्रांक्रींक्रांक्रींहांहींहूंहैंहौं खख ४

जय ४ खखहुंफट्स्वाहा ॥ ४ ॥ ॐ नमो भगवते

कालाग्निरुद्रहनुमते भ्रामय २ वद २ कुरु२ जय२
हस२दुष्टग्रहं प्रज्वलय२मर्दय२त्रासय २ शमय २
अस्त्रोभत्रिशूलडमरुकालमृत्युपाशकपालखट्वाङ्गध
राय अभयशाश्वताय आवर्त्ताय आद्यन्तरभूषणाय
परमन्त्रपरयन्त्रपरतन्त्रशतसहस्रकोटिपुञ्जं भेदय२
अग्निं बन्धय२सर्वग्रहं बन्धय २सर्वविषं बन्धय २
अनन्ताग्निदष्टनागानां द्वादशकुलवृश्चिकाना मेका
दशकुलभूतान् हन २ वज्रत उत्तुङ्गानुच्चाटय २
मारण-मोहन-वशीकरणस्तंभनजृंभणाकर्षणोच्चाटन
मीलनविद्वेषणयुद्धतकान्मम वैरिणां बन्धय २ ॐ

नमो भगवते अंकुमारिपादात्रिहारबाणोग्रमूर्त्तये ग्रा
मवासिनेऽतिपूर्वशक्ताय सर्वायुधानि अस्य क्षयाय
धारयरलंलंलंग्रां ग्रौंनिःस्वाहा ॥८॥ ॐ नमो भगवते
भद्रजातिनीलकण्ठहनुमते ॐ ठुंठुंठुंठंठं लंलंलं
देवदत्तादिगंबरअष्टमहाभैरवअष्टाङ्गधरायनवनाटक
भैरवनवाङ्गधराय अष्टमहाशक्तिअष्टाङ्गधराय नव
ब्रह्ममयाय दशविष्णुरूपाय एकादशरुद्रावताराय
द्वादशार्कतेजाय त्रयोदशसोममुखाय वीरहनुमन्त
स्तम्भन मोहनवशीकरणात्रिवश्याय नमः। राजमु
खबन्धनाय नदीमुखबन्धनमकरमुखयंधनशत्रुमुख

जिह्वाव्याघ्रसर्पवृश्चिकअग्निज्वालाविषनिगडान् सर्व
जनवैरिमुखबन्धन व्याघ्रमुखबन्धन वायुवीरहनु
मन्त ईश्वरावतार वायुनन्दन अंजनीसुत बन्धुबन्धु
सत्यबन्धु अंहांहींहुं अस्य ह्लींह्लांत्रींयांभ्रेंभ्रेंभ्रांभ्रांहृ
टहटखटखटसर्वखटविश्वखट--शत्रुखटवश्यखटसर्व
जनाद्दश्यखट । लंलांश्रींह्लींह्लींहंशत्रुमनःस्तम्भय २
भेदय २ मे विजय २ यंह्लींवंहींहींहींहींसर्वजनसार
हींहींखटविश्वखटशत्रुखटसर्वविषमंत्रार्थसिद्धिं कुरु
कुरु स्वाहा ॥ ६ ॥ रामचन्द्रं महादेवं वीरभद्रस्तवं
कृतम् । ईप्सितार्थं लभेत्सद्यस्त्रिसंध्यं यः पठे

न्नरः ॥ ७ ॥ हनुमन्तप्रसादेन सर्वत्र विजयी भवेत् ।
लक्षमावर्त्तयेद्यस्तु प्रत्यक्षो जायते ध्रुवम् ॥ ८ ॥
इति श्रीहरिकृष्णविनिर्मिते बृ० ध० उपासनास्त
बके हनुमदुपासनाध्याये हनुमदघोरास्त्रनिरूपणं
नाम चतुर्विंशं प्रकरणम् ॥ २४ ॥ अथ हनु
मल्लक्षप्रदक्षिणाविधानम् ॥ युधिष्ठिर उवाच ॥
भगवन् ज्ञानिनां श्रेष्ठ सर्वविद्याविशारद । किंचिद्वि
ज्ञप्तुमिच्छामि वक्तुमर्हस्यशेषतः ॥ १ ॥ अज्ञाना
दथवा ज्ञानात्प्रमादाद्वा कृतानि हि । पापानि सुबहू
न्यत्र विलयं यान्ति तद्वद ॥ २ ॥ व्यास उवाच ॥

लक्षप्रदक्षिणाः कार्या गोग्निद्विजहनूमताम् । पृच्छते नारदायेति प्राह ब्रह्मा शृणुष्व तत् ॥ ३ ॥ नारद उवाच॥ ये च पापरता नित्यं धर्माधर्मविवर्जिताः । व्रतहीना दुराचारा ज्ञानहीनाश्च जन्तवः॥४॥तेषां पापविनाशार्थं प्रायश्चित्तं कथं भवेत् ॥ ब्रह्मोवाच ॥ किं वर्णयामि साधूनां माहात्म्यं च भवादृशाम् ॥५॥साधु साधु च विप्रेन्द्र वच्मि ते व्रतमुत्तमम् । ब्रह्महत्यादिपापेषु सङ्कलीकरणेषु च॥६॥जातिभ्रंशकरे वापि अभक्ष्यभक्षणे तथा। विष्णुना निर्मितं पूर्वं व्रतं लक्षप्रदक्षिणम् ॥ ७ ॥ सर्वेषामपि पापानां

नाशकं परम शुभम् । आषाढे शुक्लपक्ष तु एकाद
श्यांविशेषतः ॥ ८ ॥ द्वादश्यां पौर्णमास्यां वा प्रा
रभेद्व्रतमुत्तमम् । देशकालौ तु संकीर्त्य नत्वा गुरु
विनायकौ ॥ ९ ॥ लक्षप्रदक्षिणाः कार्यास्त्रीनग्नींश्च
शुचिव्रत । जितेन्द्रियो जितप्राणो मुखेन मनुमुच्च
रेत् ॥ १० ॥ नमस्ते गार्हपत्याय नमस्ते दक्षिणा
ग्नये । नम आहवनीयाय महावेद्यै नमोनमः॥ ११॥
गवां प्रदक्षिणाः कार्या लक्षसंख्या यथाविधि । पूर्वं
पूज्य च गामेकां दत्त्वा नैवेद्यमुत्तमम् ॥ १२ ॥
पश्चात्प्रदक्षिणाः कार्या नत्वा तां च पुनःपुनः । गवा

मङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ॥ १३ ॥ यस्मा त्तस्माच्छिवं मे स्यादिह लोके परत्र च । एवं प्रद क्षिणाः कृत्वा सर्वपापैः प्रमुच्यते ॥ १४ ॥ कर्म निष्ठं शुचिं विप्रं पूजयेद्विधिवद्बुधः ॥ ततः प्रदक्षिणाः कार्या यावल्लक्षं भवेद्व्रती ॥ १५ ॥ भूमिदेव नमस्तु भ्यं नमस्ते ब्रह्मरूपिणे । पूजितो देवदैत्यैस्त्वमतः शान्तिं प्रयच्छ मे ॥ १६ ॥ एवं हनुमते कार्या भूत प्रेतविनाशिने । षोडशैरुपचारैश्च पूजयेद्वायुनन्दन म् ॥ १७ ॥ ततः प्रदक्षिणाः कुर्यादात्मकार्यार्थसि द्धये ॥ १८ ॥ मनोजवं मारुततुल्यवेगं जितेन्द्रियं

बुद्धिमतां वरिष्ठम् । वातात्मजं वानरयूथमुख्यं श्री रामदूतं शरणं प्रपद्ये ॥ १९ ॥ एवं प्रदक्षिणावर्त्तं कुर्याद्देवं प्रयत्नतः । भूतप्रेतपिशाचाद्या विनश्यंति न संशयः ॥२०॥आदित्यादिग्रहाःसर्वे शान्तिं यान्ति शिवाज्ञया । उद्यापनं च सर्वासां कुर्यात्पूर्णफलाप्तये ॥ २१ ॥उद्यापनविधानादौ पुण्याहं वाचयेत्ततः। आचार्यं वरयित्वा च प्रतिमाः स्वर्णसंभवाः ॥२२ ॥ अव्रणं कलशं पूर्णं स्थापयेन्मण्डले शुभे । विरच्य लिङ्गतो भद्रं पूजयेद्देवमञ्जसा॥२३॥पायसं जुहुयात्तत्र तत्तन्मन्त्रैर्विचक्षणः । अष्टोत्तरसहस्रं तु प्रायश्चित्तं

चरेच्छुभम् ॥२४॥ मण्डलं दक्षिणायुक्तमाचार्याय निवेदयेत् । ब्राह्मणान्भोजयेच्छक्त्या वित्तशाठ्यविवर्जितः ॥ २५ ॥ ये कुर्वन्ति व्रतमिदं पापमुक्ता भवन्तिते । भुक्त्वा यथेप्सितान्भोगानन्ते सायुज्यमाप्नुयुः ॥२२६॥ अथ प्रयोगः ॥ देशकालौ स्मृत्वा मम भूतप्रेतपिशाचादिबाधापरिहारद्वारा आदित्यादिनवग्रहशान्तिद्वारा वा श्रीमन्महारुद्रहनुमत्प्रीत्यर्थममुकसंख्याप्रदक्षिणां करिष्ये इति संकल्प्य षोडशोपचारैर्हनुमन्तं पूजयित्वा प्रदक्षिणाः कार्याः॥तत्र मन्त्रः-मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धि

मतां वरिष्ठम् । वातात्मजं वानरयूथमुख्यं श्रीराम
दूतं शरणं प्रपद्ये ॥ १॥ इति मन्त्रं पठन् प्रदक्षिणाः
प्रतिदिनं नियमानुसारं कृत्वा उत्तरपूजां कृत्वा प्रार्थ
येत् ॥ अन्यथा शरणं नास्ति त्वमेव शरणं मम ।
तस्मात्कारुण्यभावेन रक्ष मां परमेश्वर ॥ १ ॥ मन्त्र
हीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितं मया
देव परिपूर्णं तदस्तु मे ॥ २ ॥ इति क्षमाप्य अनेना
मुक्तसंख्याप्रदक्षिणाख्येन कर्मणा श्रीहनुमद्देवता
प्रीयताम् ॥ इतिश्रीहरिकृष्णविनिर्मिते बृ० ध० उ
पासनारत्नाकरे हनुमदुपासनाध्याये लक्षप्रदक्षिणावि

धानानिरूपणं नाम पञ्चविंशं प्रकरणम् ॥ २५ ॥ श्लोकाः १२७९ ॥ अथहनुमद्व्रतपूजापद्धतिः ॥ तत्रादौ हनुमद्व्रतंकर्त्तुमारभमाण आचारानुसारेण विशिष्टाचारपरम्पराप्राप्तां यथाशक्तिद्रव्यैः पम्पापूजां करिष्ये इति संकल्प्य मार्गशीर्षमासे शुक्लत्रयोदश्यां व्रतंकरिष्यमाणः द्वादश्यामेव नियतो ब्रह्मचारी जितेन्द्रियः सम्यग्रात्रिं यापयित्वा ब्राह्मे मुहूर्त्ते उत्थाय कर्तव्यं सर्वमालोकयति। शौनकाद्या ऊचुः ॥ हनुमद्व्रतसंकल्पं कर्त्तुकामोऽब्रवीज्जनः। कस्मिन्देशे व्रतं सम्यक् कर्त्तव्यं वद सूतज॥ १॥ किं च व्रतं पूर्वतरैःकुत्रा

चरितमद्भुतम् । सन्ति स्थलानि बहुधा गोष्ठवृन्दाव
नादयः ॥ २ ॥ वापीकूपतडागाद्याः कुल्याः कृत्रिम
विस्तृताः । नद्यो नदाः सागराद्याः पर्वताः सरितो
द्रुमाः ॥ ३ ॥ विचार्य बहुधा तत्त्व वद नो वदतांवर । सूत
उवाच ॥ साधु पृष्टं महाभागाः सम्यगेवोच्यते मया
॥ ४ ॥ बहवः सन्ति देशाश्च पुण्याः पुण्यविवर्धनाः ।
तथापि वक्ष्ये यद्गुह्यं तच्छृण्वन्तु मुनीश्वराः ॥ ५ ॥
पूर्वं हनुमतः पूजा कृता पम्पासरित्तटे । तस्मात्
पम्पासरित्तीरे हनुमद्व्रतमुत्तमम् ॥ ६ ॥ नानादेशेषु
कर्तव्या पम्पापूजा प्रयत्नतः । ब्राह्मे मुहूर्ते चोत्थाय शौ

चादिभिरतन्द्रितः ॥७॥ नित्यकर्मसमाप्याशु योग
क्षेमं समाविशेत् । ततश्च पंचभिर्वाद्यैरुपेतो बन्धुभि
र्वृतः ॥८॥ तत्रत्यां च नदीं कांचिद्गत्वा स्नात्वा च
वाग्यतः । अघमर्षणमंत्रैश्च शुचिः प्रयतमानसः॥९॥
सन्ध्यावन्दनपूर्वं च नित्यकर्म समाप्य च । पितॄन्
संतर्प्य यत्नेन ललाटे तिलकोज्ज्वलः ॥१०॥ षोड
शानुपचारांश्च पम्पायाः सर्वतो व्रती ॥ ११ ॥ अथ
पूजा ॥ हेमकूटागिरिप्रांतजनानां गिरिसानुगाम् ।
पम्पामावाहयाम्यस्यां नद्यां हृद्यां प्रयत्नतः ॥ १ ॥
आवाहनम् ॥ तरङ्गशतकल्लोलैरङ्गचामरसोज्ज्वले ।

पम्पानदि नमस्तुभ्यं गृहाणासनमुत्तमम् ॥ २ ॥
आसनम् ॥ हृद्यं सुगन्धसंपन्नं शुद्धं शुद्धांबुसत्कृतम् ।
पाद्यं गृहाण पम्पाख्ये महानदि नमोऽस्तुते ॥ ३ ॥
पाद्यम् ॥ भागीरथि नमस्तुभ्यं सलिलेन सुशोभने ।
अनर्घ्यमर्घ्यमनघे गृह्यतामिदमुत्तमम् ॥ ४ ॥ अर्घ्यम् ॥
पम्पानदि महापुण्ये संपादितसुशोभने । गोदाव
रिजलेनाद्य गृहाणाचमनीयकम् ॥ ५ ॥ आचम
नीयम् ॥ दुग्धाज्येक्षुरसैः पुण्यैर्दध्ना च मधुना तथा ।
पंचामृतैः स्नापयिष्ये पम्पानदि नमोऽस्तु ते ॥ ६ ॥
पंचामृतस्नानम् ॥ शुद्धनीलैः शुद्धजलैर्नारिकेलांबुभि

स्तथा । पुण्यैः कृष्णानदीतोयैः सिंचामि त्वां सारि
द्वरे॥ शुद्धोदकस्नानम् ॥ ७ ॥ महामूल्यंचकार्पासं
दिव्यवस्त्रमनुत्तमम् । पम्पानादिमहापुण्ये पंपाशोभा
तिशोभने ॥ ८ ॥ वस्त्रम् ॥ श्रौतस्मार्तादिसत्कर्मफ
लदं पावनं शुभम् । यज्ञोपवीतमधुना कल्पये सारिदु
त्तमे॥९॥यज्ञोपवीतम्॥ कर्पूरगुटिकामिश्रं कस्तूर्या
च विमर्दितम् । यत्नेन कल्पितं गन्ध लेपयेऽङ्गं सारि
द्वरे ॥१०॥ गन्धम् ॥ लक्षणोक्तान्हारिद्राक्तानक्षतां
श्चोत्तमाञ्छुभान् । पम्पानादि गृहाणेमाञ्छुभशोभा
तिवृत्वये ॥११॥ अक्षतान् ॥ अतसीकुसुमोपेतं पङ्क

रुहदलोज्ज्वलम् । कुंकुमं शङ्करजटासंभूते सरिदर्पं
ये ॥ १२ ॥ कुंकुमम् ॥ कज्जलं त्रिजगद्वन्द्ये महापु
ण्यतरङ्गिणि । नेत्रयोः पादमनघं गृह्यतां सरितां वरे
॥ १३ ॥ नेत्रांजनम् ॥ शतपत्रैश्च कल्हारैः कुमुदैर्बकु
लैरपि । मल्लिकाजातिपुन्नागैः केवलैश्चापि चंपकैः
॥ १४ ॥ तुलसीदाममिश्चापि तथा बिल्वदलैरपि ।
पूजयामि महापुण्ये पम्पानदि नमोऽस्तु ते ॥ १५ ॥
पुष्पाणि ॥ अथांगपूजा ॥ गोदावर्य्यै नमः पादौ पूज
यामि । कृष्णायै० गुल्फौ० । पापहारिण्यैनमः जंघे ।

सुभ्रुवेन० जानुनी । उरुतरंगिण्यै० ऊरू । तडिदु

ज्ज्वलजवायै० कटिम् । अंबुशोभिन्यै० नितंबं० । अणुमध्यायै० मध्यं० । सुस्तनायै० स्तनौ० । कंबुकंठायै० कंठं० । ललितबाहुतरंगायै० बाहू० । दीर्घवेण्यै० वेणीं० । सुवक्त्रायै० वक्त्रं० । दुर्वारवारितपूरायै० शिरः० । सहस्रमुखायै० सर्वांगं पूजयामि । १६ । सदशाङ्गं शुभं दिव्यं सगुग्गुलमनुत्तमम् । साज्यं परिमलोद्भूतं धूपं स्वीकुरु पावने ॥ १७ ॥ धूप० ॥ साज्यमग्निप्रकाशोद्यत्कोटिसूर्यसमद्युतिम् । पश्य दीपं प्रसन्नाङ्गे पम्पानदि नमोऽस्तु ते ॥ १८ ॥ दीपं० ॥ शाल्यन्नं स्वर्णपात्रस्थं शाकापूपसमन्वितम् । साज्यं

दधि पायसं च नैवेद्यं प्रतिगृह्यताम् ॥ १९॥ नैवेद्यम् ॥
पूगैः सुशोभनैश्चापि नागवल्लीदलैर्युतम् । तांबूलं गृ
ह्यतां देवि पम्पानदि नमोऽस्तु ते ॥ २०॥ तांबूलं० ।
व्रतपूर्तिमहाकीर्तिदिव्यस्फूर्तिप्रकीर्तिदम् । कर्तुका
मो व्रतमिदं सौवर्णं पुष्पमर्पयेत् ॥ २१॥ सुवर्णपुष्पं० ॥
प्रदक्षिणत्रयं देवि प्रयत्नेन प्रकल्पितम् । पश्याद्य
पावने देवि पम्पानदि नमोऽस्तुते ॥ २२॥ प्रदक्षिणां० ॥
नमस्ते नमस्ते विशालोज्ज्वलाङ्गे नमस्ते नमस्ते
लसत्सत्तरंगे। नमस्ते नमस्ते गिरिप्रांतरंगे नमस्ते
नमस्ते कलदहिरङ्गे ॥२३॥ नमस्कारं० । अपराध

शतं देवि मत्कृतं च दिने दिने । क्षम्यतां पावने देवि पम्पानदि नमोऽस्तु ते ॥ २४ ॥ क्षमापनम् ॥ पम्पानदि महापुण्यतरङ्गिणि नमोऽस्तु ते । त्वत्तीरे हनुमत्पूजा कृता रामेण धीमता ॥ २५ ॥ मनोरथफलावाप्तिस्तस्याभीष्टं न संशयः । सुग्रीवेण च तीरेस्मिन्कपिवर्यपतेर्व्रतम् ॥ २६ ॥ सत्कृतं च मनो वाञ्छा सद्यस्तस्य बभूव सा । अतस्त्वन्नीरपुलिने कृते हनुमतो व्रते ॥ २७ ॥ श्रेयांसि मम सर्वाणि न विघ्नानि भवन्त्विह । इति संप्रार्थ्य पम्पाख्यां नदीं शुभतरङ्गिणीम् ॥ २८ ॥ कलशोदकपाणिश्च गच्छेत

स्वगृहमादरात् ॥ २९॥ इति पम्पापूजा समाप्ता ॥
अथ श्रीहनुमत्पूजा॥ पूर्वोच्चारितैवं गुणेति देशकालौ
स्मृत्वा मया आचारितस्य व्रतस्य आचीर्यमाण
स्य च व्रतस्य सम्पूर्णफलावाप्त्यर्थं भार्यया सह
हनूमत्पूजां करिष्ये। तदङ्गत्वेन प्रणवपूर्वकं गणे
शपूजनं कृत्वा भूशुद्धिं भूतशुद्धिं कृत्वा कलशा
राधनं कृत्वा पीठपूजां कुर्यात्। पीठस्य अधोभा
गे । अतलायनमः । वितलायनमः । सुतलाय
नमः । रसातलाय नमः । तलातलाय नमः । महा
तलाय नमः । महापातालाय नमः । तत्र अगाधस

वैंतोशब्दात्मजे नमः । तत्र कमले कमठाय नमः । तदुपरि सहस्रमणिफणाप्रकाशमानशेषाय०।अष्टदिग्गजेभ्यो न०। तदुपरि भूमण्डलाय नमः। तदुपरि भूर्लोकाय०। भुवर्लोकाय०। स्वर्लोकाय०। जनलोकाय०। तपोलोकाय०। महर्लोकाय०। सत्यलोकाय०। अष्टदिक्पालकेभ्यो न०। तन्मध्ये मेरवे न०। मेरोर्दक्षिणादिग्भागे कस्मैचिद्द्रोणशैलाय०। तन्मध्ये सुरतरवे न०। तन्मूले सुवर्णवेदिकायै०। वेद्यां वृक्षस्य पूर्वभागे नवरत्नखचितचारुरत्नपीठाय०। एवं संभावयित्वा पंचरंगैः स्वस्तिकशंखपद्मैश्च

रङ्गवल्लिं विलिख्य तन्मध्ये त्रयोदशपद्मं विलि
ख्य तदुपरि शुभ्रतंदुलान्विनिक्षिप्य नूतनकलशं
स्थापयित्वा शुद्धोदकेन कलशं पूरयित्वा तदुपरि
पीतांबरं संस्थाप्य त्रयोदशकमलमालिख्य माणि
कायाम् । ॐ नमो भगवते वायुनन्दनाय नम इति
वर्णबीजानि पूर्वादिदलेषु क्रमेण विलिख्य त्रयोदश
ग्रंथियुक्तं हरिद्रादिनवदोरकं प्रतिष्ठाप्य प्राणायाम
पूर्वकं शुद्धान्तःकरण उत्तराभिमुख उपविश्य
सीतासमेतश्रीरामचन्द्रध्यानादिमानसं कृत्वा श्रीह
नूमन्तमावाहयेत् । श्रीहनुमतः प्राणा इह प्राणाः

हनूमतः जीव इह स्थितः सर्वेन्द्रियाणि वाङ्मन
स्त्वक्चक्षुर्जिह्वाघ्राणपाणिपादपायूपस्थानि हनूमत
इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा । श्रीरामचरणा
म्भोजयुगलस्थिरमानसम् । आवाहयामि वरदहनू
मन्तमभीष्टदम् ॥ १ ॥ इति आवाहनम् ॥ कर्णिकारसु
वर्णाभं वर्णनीयं गुणोत्तमम् । अर्णवोल्लंघनोद्युक्तं
तूर्णं ध्यायामि मारुतिम् ॥ २ ॥ इतिध्यानम् ॥ नवरत्न
मयं दिव्यं चतुरस्रमनुत्तमम् । सौवर्णमासनं तुभ्यं
कल्पये कपिनायक ॥ ३ ॥ आसनं० ॥ सुवर्णकल
शानीतं सुष्ठुवासितमादरात् । पादयोः पाद्यमनघ

प्रतिगृह्ण प्रसीद मे ॥४॥ पाद्यं ०॥ कुसुमाक्षतसंमिश्रं गृह्यतां कपिपुङ्गव । दास्यामि तेऽञ्जनीपुत्र स्वमर्घ्यं रत्नसंयुतम् ॥५॥ अर्घ्यं ०॥ महाराक्षसदर्पघ्न सुराधिपसुपूजित । विमलं शमलघ्न त्वं गृहाणाचमनीयकम् ॥ ६ ॥ आचमनं ० ॥ मध्वाज्यक्षीरदधिभिः सगुडैर्मंत्रसंयुतैः । पंचामृतैः पृथक्स्नानैः सिंचामि त्वां कपीश्वर ॥ ७॥ पंचामृतस्नानं ० ॥ सुवर्णकलशानीतैर्गंगादिसरिदुद्भवैः । शुद्धोदकैः कपीश त्वामभिषिंचामि मारुते ॥ ८ ॥ शुद्धोदकस्नानं ० ॥ ग्रथितां नवभीरत्नैर्मेखलां त्रिगुणीकृताम् । मौञ्जं मौं

जीमयीं पीतां गृहाण पवनात्मज॥९॥ कटिसूत्रं० ॥ कटिसूत्रं गृहाणेदं कौपीनं ब्रह्मचारिणः । कौशेयं कपिशार्दूल हरिद्रक्तं सुमंगलम् ॥१०॥ कौपीनं० ॥ पीतांबरसुवर्णाभमुत्तरीयार्थमेव च । दास्यामि जानकीप्राणत्राणकारण गृह्यताम् ॥ ११ ॥ उत्तरीयं० ॥ श्रौतस्मार्त्तादिकर्तॄणां साङ्गोपाङ्गफलप्रदम् । यज्ञोपवीतमनघं धारयानिलनन्दन ॥ १२ ॥ यज्ञोपवीतं० ॥ दिव्यकर्पूरसंयुक्तं मृगनाभिसमन्वितम् । सकुंकुमं पीतगन्धं ललाटे धारय प्रभो ॥ १३ ॥ गंधं० ॥ हारिद्राक्तानक्षतांस्त्वं कुंकुमद्रव्यमिश्रितान् ।

धारय श्रीगंधमध्ये शुभशोभनवृद्धये ॥१४॥ अक्ष
तान्०॥ नीलोत्पलैः कोकनदैः कल्हारैः कमलैरपि।
कुमुदैः पुण्डरीकैस्त्वां पूजयामि कपीश्वर ॥ १५ ॥
मल्लिकाजातिपुष्पैश्च पाटलैः कुटजैरपि । केतकीब
कुलैश्चूतैः पुन्नागैर्नागकेसरैः ॥ १६ ॥ चंपकैः शत
पत्रैश्च करवीरैर्मनोहरैः। पूजये त्वां कपिश्रेष्ठ सबि
ल्वैस्तुलसीदलैः ॥ १७ ॥ पुष्पं स० ॥ अथ ग्रंथि
पूजा ॥ अंजनीसूनवेनमः प्रथमग्रंथिं पूजयामि।
हनुमतेनमः।द्वितीयग्रं०।वायुपुत्रायन० तृतीयग्रं०।
महाबलाय नमः चतुर्थग्रंथिं०। रामेष्टाय नमः

पंचमग्रंथिं० । फाल्गुनसखाय० षष्ठग्रं० । पिंगाक्षाय० सप्तमग्रंथिं० । अमितविक्रमाय० । अष्टमग्रं०॥ कपीश्वराय० नवमग्रं० । सीताशोकविनाशनाय नमः दशमग्रं० । लक्ष्मणप्राणदात्रे नमः एकादशग्रं० । दशग्रीवदर्पघ्नाय० द्वादशग्रं० । भविष्यद्ब्रह्मणेनमः त्रयोदशग्रं० ॥अथाङ्गपूजा॥ हनूमते नमः पादौ पूजयामि । सुग्रीवसखाय० गुल्फौ० । अंगदमित्राय नमः जंघे० । रामदासाय नमः ऊरू पू० । अक्षघ्नाय० कटिं० । लङ्कादहनाय नमः वालं पू० । रामप्रणिहाय० नाभिं० । सागरोल्लंघनाय० मध्यं० ।

लङ्कामर्दनाय न० केशावालिं पू० । संजीवनीहर्त्रे० स्तनौ० । सौमित्रिप्राणदाय० वक्षः पू० । कुंठितदश कंठाय० कंठं पूजयामि । रामाभिषेककारिणे नमः हस्तौ० । मंत्ररचितरामायणाय नमः वक्रंपू० । प्रस न्नवदनाय० वदनं० । पिंगनेत्राय० नेत्रे पूजयामि । श्रुतिपारगाय नमः श्रुतिं पू० । ऊर्ध्वपुंड्रधारिणे नमः कपोलं पू० । मणिकंठमालिने न० शिरः पू० । सर्वा भीष्टप्रदाय सर्वांगं पूजयामि । दिव्यं सुगुग्गुलं साज्यं सदशांगं सवह्निकम् । गृहाण मारुते धूपं सुप्रियं घ्राणतर्पणम् ॥ १८ ॥ धूपं० ॥ घृतपूरितमुज्ज्वालं

सितसूर्यसमप्रभम् । अतुलं तव दास्यामि व्रतपूर्त्यै सुदीपकम् ॥१९॥ दीपं० ॥ सशाकापूपसूपाढ्यपायसानि च यत्नतः। सक्षीरदधिसाज्यं च सापूपं घृतपाचितम् ॥ २० ॥ नैवेद्यं ॥ गोदावरीजलं शुद्धं स्वर्णपात्राहृतं प्रियम् । पानीयं पावनोद्भूतं स्वीकुरु त्वं दयानिधे ॥ २१ ॥ पानीयं० ॥ आपोशनं नमस्तेऽस्तु पापराशितृणानलम् । कृष्णावेणीजलेनैव कुरुष्व पवनात्मज ॥ २२ ॥ उत्तरापोशनं० ॥ दिवाकरसुतानीतजलेन स्पृष्टगंधिना । हस्तप्रक्षालनार्थाय स्वीकुरुष्व दयानिधे ॥२३॥ हस्तप्रक्षालनं० ॥ रघुवीरपद

न्यासास्थिरमानस मारुत । कावेरीजलपूर्णेन स्वीकु
र्वाचमनीयकम् ॥ ३४ ॥ शुद्धाचमनीयं० ॥ वायुपुत्र
नमस्तुभ्यं पुष्पं सौवर्णकं प्रियम् ॥ पूजयिष्यामि
ते मूर्ध्नि नवरत्नसमुज्ज्वलम् ॥२५ ॥ सुवर्णपुष्पं० ॥
तांबूलमनघ स्वामिन्प्रयत्नेन प्रकल्पितम् । अवलो
कय नित्यं ते पुरतो रचितं मया ॥२६ ॥ तांबूलं० ॥
शतकोटिमहारत्नादिव्यमद्रत्नपात्रके । नीराजन
मिदं दृष्टेरतिथीकुरु मारुते ॥ २७ ॥ नीराजनं० ॥
मूर्धानं दिवो० ॥२८॥ पुष्पांजलिं० ॥ पापोऽहं०॥

॥२९॥इति प्रदक्षिणा ॥ नमस्तेस्तु महावीर नमस्ते

वायुनंदन । विलोक्य कृपया नित्यं त्राहि मां भक्त वत्सल ॥ ३० ॥ नमस्कारं० ॥ ये पुत्रपौत्रादिसमस्त भाग्यं वाञ्छन्ति वायोस्तनयं प्रपूज्य । त्रयोदशाग्रं थियुतं तदङ्कं बध्नंति हस्ते वरदोरसूत्रम् ॥ ३१ ॥ दोरं ग्रहणम् ॥ अंजनीगर्भसंभूत रामकार्यार्थसंभव । वर दोरकृताभासारक्ष मां प्रतिवत्सरम् ॥ ३२ ॥ पूर्व दोरकोत्तारणम् ॥ अनेन भगवान्कार्यं प्रतिपादकावि ग्रहम् । हनूमान्प्रीणायित्वा च प्रार्थितो हृदि तिष्ठतु ॥ ३३ ॥ प्रार्थना ॥ यस्य स्मृत्या० ॥ ३४ ॥ वायन दानम् ॥ तदङ्गत्वेन ब्राह्मणपूजनम् । ददाति प्रतिगृ

ह्णाति हनूमानेव नः स्वयम् । व्रतस्यास्य च पूर्त्यर्थं प्रतिगृह्णातु वायनम् ॥ ३५ ॥ इतिवायनमंत्रः ॥ इति पूजाविधानं संपूर्णम् ॥ अथोद्यापनम् ॥ अथ यजमानो महानद्यां माध्याह्निकस्नानं कृत्वा नित्यकर्म विधायाचार्यब्रह्मऋत्विग्भिः सहोपविश्य प्राणानायम्य एवंगुणेत्यादि शुभतिथौ धर्मपत्नीसमेतस्य मम हनुमद्व्रतकल्पोक्तसंपूर्णफलावाप्तये धर्मार्थकाममोक्ष चतुर्विधपुरुषार्थसिद्ध्यर्थं श्रीमदांजनेयप्रीत्यर्थं हनुमद्व्रतोद्यापनाख्यं कर्मकरिष्ये । अस्मिन्कर्मणि आचार्यत्वं भवंतः कुर्वंत्विति वेदवेत्तारं कुटुंबिनं वित्तहीनं

शांतमाचारवन्तं ब्राह्मणमाचार्यत्वे नियोज्य एवं
लक्षणसंयुक्तमपरं ब्राह्मणं ब्रह्मत्वे नियोज्य ततः त्रयो
दशकलशावाहनार्थं त्रयोदशब्राह्मणानृत्विग्विधौ
नियोज्य एवमावरणं कृत्वा ततो निष्कमात्रसुवर्णेन
तदर्धेन यथाशक्त्या हनुमत्प्रतिमां कृत्वा प्राणाना
यम्य हनुमद्व्रतोद्यापनाङ्गत्वेन पंपापूजां कृत्वा पुनः
प्राणानायम्य शुभतिथौ धर्मपत्नीसमेतस्य मम
मनोवांछाफलसिद्ध्यर्थं श्रीमदांजनेयप्रीत्यर्थमांजने
यप्रतिमापूजां करिष्ये। इति संकल्प्य तत्प्रतिमाशु
द्ध्यर्थं पंचामृतस्नपनं कृत्वा मूलमंत्रेण शुद्धोदक

स्नपनं कृत्वा पंचप्रस्थपरिमितश्वेततंदुलोपरि अलं कृत्य पूर्णकलशं संस्थाप्य तदुपरि वस्त्रं निधाय तदुपरि प्रतिमामाधाय प्राणप्रतिष्ठां कृत्वा ततस्त्र योदशकलशान्प्रतिमावेष्टितांस्तंदुलेषु निधाय कलशपूजां कृत्वा तेषु कलशेषु वस्त्राण्यावेष्ट्य तेषु नानाविधफलानि दत्त्वा सुवर्णानि कृत्वा आंजनेय पूजार्थं कलशपूजां कृत्वा ततः पीठार्चनं कुर्यात् ॥ पीठस्याधस्तलाधः तलायनमः । वितलाय० । सुतलाय० । रसातलाय० । तलातलाय० । महातलाय० । पातालाय० । तदगाधसर्वतोमुखसुधाब्धिभ्यां नमः ।

तत्र कस्मैचित्कमठाय० । तदुपरि सहस्रफणिफणामंडितमणिप्रकाशिताशेषलोकशेषाय० । अष्टदिग्गजेभ्यो० । तदुपरि भूमंडलाय० । दिक्पालकेभ्यो नमः । तन्मध्येमेरवेनमः । मेरोर्दक्षिणदिग्भागेकस्मैचिद्रत्नसानवे न० । तन्मध्येसुरतरवे० । तन्मूले सुवर्णवेदिकायै नमः । वेद्यां वृक्षस्यपूर्वभागेनवरत्नखाचितनूतनपीठाय नमः । एवं भावयित्वा । स्वामिन्सर्वजगन्नाथ यावत्पूजावसानकम् । तावत्त्वं प्रीतिभावेन प्रतिमायां स्थिरो भव॥ ततस्त्रयोदशग्रंथियुक्तदोरकं प्रतिष्ठाप्याथ ध्यानम्-वन्दे विद्युद्वलयलसितं

ब्रह्मसूत्रं दधानं कर्णद्वन्द्वे कनकवलये कुण्डले धारयन्तम् । सत्कौपीनं कटिपरिहृतं कामरूपं कपीन्द्रं नित्यं ध्यायेदनिलतनयं वज्रदेहं वरिष्ठम् ॥ १ ॥
प्रतप्तजांबूनदहादिव्यभासं देदीप्यमानाग्निविभासुराक्षम् । प्रफुल्लपंकेरुहशोभनास्यं ध्याये हृदिस्थं पवमानसूनुम् ॥ २ ॥ अथ कल्पोक्तप्रकारेण आवाहनादिषोडशोपचारान्कृत्वा । नमः सर्वहितार्थाय जगदाराध्यकर्मणे । अमेयायाञ्जनेयाय पुनरर्घ्यं पुरोऽर्पयेत् ॥ ३ ॥ इति प्रसन्नार्घ्यं० ॥ भक्त्या प्रकल्पितैरेतैरुपचारैश्च षोडशैः । भगवन् हनुमन्नीश प्रीयतां

मे प्रियोक्तिभिः ॥ ४ ॥ उपचारसमर्पणम् ॥ यस्य स्मृत्या० ॥ ५ ॥ एवं रात्रौ प्रथमयामपूजां कृत्वा तस्यां रात्र्यां प्रतियामपूजां कुर्वन्गीतवादित्रादिभिर्मङ्गलध्वनिभिर्भागवतपठनादिपुराणश्रवणादिभिर्जागरणं कृत्वा परेद्युः प्रभाते महानद्यां ब्राह्मणैः सह स्नानं कृत्वा नित्यकर्म विधाय गंधादिभिरलंकृत्य गृहमागत्य पूर्ववत्पूजां कृत्वा हनुमद्व्रतोद्यापनाङ्गहोमं कुर्यात् ॥ क्षीरान्नेन आज्येन पिप्पलसमिद्भिः कल्पोक्तद्रव्येण मूलमंत्रेणाष्टोत्तरसहस्रमष्टोत्तरशतं वा होमं कुर्यात् । पूर्णाहुतिं च दत्त्वा ब्रह्मणे दक्षिणां दत्त्वा

तत आचार्यं पूजयित्वा प्रतिमां सवस्त्रां सालंकारां सतन्दुलां च दत्त्वा तद्दानसाद्गुण्यार्थं दक्षिणां दत्त्वा आचार्याय सवत्सां सालङ्कारां पयस्विनीं गां दद्यात्। तत ऋत्विग्भ्यःसवस्त्रान् कलशान्दत्त्वा दक्षिणां दत्त्वा विशिष्टपंग्वुदीनान्धकृपणजनान् ब्राह्मणान्संतर्प्य ऋत्विगादिब्राह्मणाञ्छतं पंचाशत्पंचविंशतिं त्रयोदश वा ब्राह्मणान्मिष्टान्नभोजनेन संतर्प्य भूरिदानविभवानुसारेण कुर्यात् । एवं कुर्वन्यजमानः कृतार्थो भवति। हनुमान्सुप्रीतो वरदो भूत्वा पुत्रपौत्रादिसर्वकामान्प्रयच्छति ॥ इतिशौनकादिकान प्रति

सूतः प्रोवाच ॥ १ ॥ इतिहनुमद्व्रतोद्यापनपूजाप्रयोगविधिः ॥ श्लोकाः १२८० ॥ अथकथा ॥ मुनयो जाह्नवीतीरे शौनकाद्या द्विजोत्तमाः । प्रणम्य जगतां नाथं रमानाथं मुहुर्मुहुः ॥१॥ सूतं पुराणवक्तारं महाभागवतोद्भवम् । दृष्ट्वा प्रांजलयः सर्वे प्रोचुर्व्रतपरायणाः ॥२॥ ऋषय ऊचुः॥ वासुदेव कथाप्रश्ने व्रतानि बहुशस्त्वया । प्रोक्तानि कृपयास्माकं व्रतमन्यद्वदस्व नः ॥ ३ ॥ सूत उवाच॥ शृणुध्वमृषयः सर्वे मत्तः परतरं व्रतम् । चतुर्णामपि वर्णानां कर्तव्यं पावनोत्तमम् ॥ ४ ॥ गुह्याद्गुह्यतमं लोके मङ्गलानां च

मङ्गलम् । आयुरारोग्यफलदं पुत्रपौत्रफलप्रदम् ॥५॥
संपत्करं प्रतिदिनं विद्याप्रदमनुत्तमम् । कदाचिद्भ
गवान् व्यासः सह शिष्यैर्दयानिधिः ॥ ६ ॥ युधि
ष्ठिरं द्वैतवने द्रष्टुमभ्यागतो हठात् । निर्वैरं मृगसं
कीर्णं सपुष्पफलवृक्षकम् ॥ ७ ॥ सपंचमापि काकीर्ण
सषड्जाशिखिसंकुलम् । श्रुताध्ययनसंपन्नैर्यज्वाभिर्ब
हुवेदिभिः ॥ ८ ॥ पुत्रपौत्रैः परिवृतैः कलितं ललितं
ततम् । शास्त्रव्याख्यानचतुरैर्वेदघोषोपशोभितम्
॥ ९ ॥ महाभागवतोद्गीतं लीलाहरिकथाश्रयम् ।
नित्यानन्दानिलयं स्तुत्यं सर्वाश्रमेषु च ॥ १० ॥

सानुजं सकलत्रं च तत्रापश्यद्युधिष्ठिरम् । कृष्णद्वै
पायनं सोपि श्रुत्वाभ्यागतमादरात् ॥ ११ ॥ अति
दूरं च निष्क्रम्य पुरस्कृत्य सहानुजैः । एकान्त
सदनं नीत्वा निविष्टं पर्यपूजयत् ॥ १२ ॥ द्रौप
दीरचितां पूजामुररीकृत्य स द्विजैः । सादरं कुशलं
धर्मं पप्रच्छेन्द्रं यथा गुरुः ॥ १३ ॥ वेदव्यास उ
वाच ॥ भद्रं खलु महाराज कुशलं खलु पार्थिव ।
आस्ते खलु महावीरः सुखमेव वृकोदरः ॥ १४ ॥
धनंजयः सुखी चैव यमौ च सुखिनावुभौ । संपा
दितं पाशुपतं दिव्यमस्त्रं किरीटिना ॥१५॥ अन्यद

गुह्याद्गुह्यतमं वदतः शृणु तन्मम । अस्ति व्रतं महा
राज केवलं संपदालयम् ॥ १६ ॥ कृते चास्मिन् व्रते
शीघ्रं भवद्राज्यागमो भवेत् ॥ धर्मपुत्र उवाच ॥
किंनाम व्रतमाहात्म्यमैश्वर्यं तस्य कीदृशम् । देवता
तत्र का प्रोक्ता को विधिः पूजनं कथम् ॥ १७ ॥
कस्मिन्मासे च कैः पूर्वं व्रतमाचरितं प्रभो । इदानी
मेव तत्कुर्यां यदि शीघ्रफलप्रदम् ॥ १८ ॥ इत्थं त्व
याऽतिदुःखार्तैं कृपा चेन्मयि सानुजे । भवादृशानां
महतां बान्धवो मम नापरः ॥ १९ ॥ युधिष्ठिरेण
स मुनिः सविश्वासमुदीरितः । प्रत्युवाच स्मरंश्चित्ते

हनुमन्तं मुहुर्मुहुः ॥ २० ॥ व्यास उवाच ॥ शृणु राजेन्द्र तन्नाम हनुमद्व्रतमद्भुतम् । उच्चारणादेव तस्य कार्यसिद्धिर्न संशयः ॥ २१ ॥ दुष्टग्रहोच्चाटनं च महाज्वरानिवारणम् । अलं हि बहुभिर्वाक्यैरभीष्टदमिति स्मृतम् ॥ २२ ॥ पुरा हि भगवान् कृष्णः पाञ्चाल्या प्रार्थितो भृशम् । आचचक्षे व्रतमिदं सविशेषं हनूमतः ॥ २३ ॥ तत्प्रभावादेव लब्धास्त्वया परमसंपदः । कदाचिदपि पाञ्चाल्याः कण्ठस्थं व्रतदोरकम् ॥ २४ ॥ दृष्ट्वा धनञ्जयः प्राह किमेतद्धृतमित्यलम् । साचचक्षे सुमधुरं व्रतागमनमुत्त

मम ॥ २५ ॥ श्रुत्वैतद्दैववशगः पार्थः क्रोधसमाकुलः। प्राह वै परुषं वाक्यं सोच्चैश्वर्यातिगर्वितः ॥ २६॥ ध्वजे मम निबद्धोऽयं वानरो नियतं मया। किं दास्यति मम ब्रूहि बटुर्वन्याशनो मृगः ॥२७॥ तिर्यग्जन्मपराधीनो योषितो बुद्धिरीदृशी। एतादृशैर्वैतैरस्मान्न वञ्चयितुमर्हसि॥ २८॥ इत्युक्ता साति दुःखार्ता प्राह तथ्यं धनञ्जयम्। भो राजन् सुकुमारेण आख्यातं मम सुप्रियम् ॥ २९॥ जगन्नाथेन कृष्णेन तथा तस्मान्मया धृतम्। अर्जुन उवाच ॥ दुःशीले छद्मना तुभ्यं तेन हास्यात्समारितम्॥३०॥

मन्निबद्धस्य तस्यैव मदधीनस्य दासवत्। पूजा
तेन कथं प्रोक्ता दुष्टचित्तेन विष्णुना ॥ ३१ ॥ पति
व्रता न च त्वं वै पतिवाक्यपरायणा। त्याज्यं तद्दो
रकं ते तु व्रताङ्गव्रतमप्युत ॥ ३२ ॥ इतीरितेयं
संत्रस्ता पतित्वात्पतिदेवता। त्यक्त्वा तु दोरक तत्र
न्यस्तं चोद्यानमध्यमे ॥३३॥ ततः सकलसंपत्तिर्य
थागतमगात्तदा। भवद्भिरीदृशं प्राप्तमायासाद्धनसे
वनम् ॥३४॥ त्रयोदशग्रंथियुक्तदोरस्योल्लंघनेन वै।
भोक्तव्यं तत्फलं सौख्यं वत्सरैश्च त्रयोदशैः। इत्ये
तत्सकलं श्रुत्वा कृष्णा सस्मार तद्व्रतम् ॥ ३५ ॥

सत्यमित्याह सर्वेषां पतीनां पुरतस्तदा ॥ व्यास उवाच। अपरं श्रोतुमिच्छा ते इतिहासं वदामि ते। पुरा हि राघवः सीतां द्रष्टुकामः सलक्ष्मणः ॥३६॥ ऋष्यमूकमुपागम्य हनुमन्तं ददर्श ह। ससुग्रीवेण तेनासौ रामः सख्यं चकार ह ॥ ३७ ॥ श्रीहनूमानुवाच ॥ राम राम महाबाहो यद्वक्ष्ये शृणु तद्वचः। भक्तस्य तव मे राम कार्यातुरवशोऽरितः ॥३८॥ अहं पुरा मघवता वज्रेण हनुताडितः। तदाप्रभृति हनुमानिति विख्यातोऽस्मि भूतले। तदा मां मूर्च्छितं दृष्ट्वा पिता मे वायुरब्रवीत् ॥ ३९ ॥ यतो निपातितः

पुत्र इति क्रुद्धस्तिरोदधे । तदा ब्रह्मादयो देवाः सा
क्षाद्भूत्वा वदंति ह । आञ्जनेय चिरंजीव त्वममेय
पराक्रमः ॥ ४० ॥ अशेषरामकार्याणि साधय त्वं
कपीश्वर । वायुपुत्र प्लवंगेश हनुमद्व्रतनायकम् ॥ ४१ ॥
तद्यश्चकार विमलं भृशं प्रियतमोद्भुतम् । तस्य
सर्वाणि कार्याणि सिध्यंतीतिवरं ददुः ॥ ४२ ॥ कार्या
र्थिना राघवेण कृतमित्यब्रवीच्च माम् । स्मृतं तद्वै
रामवाक्यं कुरु स्वामिन्मयेरितम् ॥ ४३ ॥ न मन्तव्यं
वृथा नाथ सत्यं मन्तव्यमीश्वर । रोचते यदि त्वच्चित्ते
तत्कुरुष्वार्थसिद्धये ॥ ४४ ॥ इत्युक्त्वा संस्थिते

तस्मिन् तदा संक्रमते हठात् । आकाशवाणी तत्रो
च्चैर्यदुक्तं सत्यमेव तत् ॥ ४५ ॥ इति रामः प्रसन्नश्च
श्रुत्वा गगनभाषितम् । चिकीर्षया व्रतस्यास्य हनुमं
तमथाब्रवीत् ॥ ४६ ॥ हनुमन्को विधिस्तस्य कदा कर्त
व्यमेव तत् । ब्रूहीति वचनं श्रुत्वा प्रत्युवाच मरुत्सु
तः ॥ ४७ ॥ मार्गशीर्षे सितेपक्षे त्रयोदश्यांजयप्रदे । अ
भिजिन्निकटे काले त्रयोदशघटीयुते ॥ ४८ ॥ त्रयोदश
ग्रंथियुतं दोरकं कलशे स्थितम् । हारिद्राभं ततस्तत्र
मामावाह्य प्रपूजयेत् ४९ पीतगंधं पीतपुष्पं पीतद्रव्यं
विशेषः ।नमो भगवते वायुनंदनायेति मंत्रतः ॥ ५० ॥

ॐकारेणानेन पूजां कुर्यात्षोडश यत्नतः। सोपचारं ब्राह्मणाय दद्याद्वायनमुत्तमम् ॥ ५१ ॥ त्रयोदशापूप मात्रं गोधूमान्नं प्रदापयेत् । सदक्षिणं सतांबूलं ब्राह्मणान्भोजयेत्तदा ॥५२ ॥प्रारंभे त्वस्य कार्याणि सिद्ध्यत्येव न संशयः । तावत्कर्तव्यमेतद्वै यत्नतश्च त्रयोदश ॥ इति॥५३॥ उद्यापनं यथान्यायं कुर्यात्कलशवस्त्रकैः। संपूर्णमपि चेत्युक्तमित्युक्त्वा विरराम ह ॥ ५४॥रामोपि सह सुग्रीवः सानुजस्तच्चकार ह। कार्यसिद्धिरभूत्तस्य सुग्रीवश्च विभीषणः ॥ ५५ ॥ विभीषणादिरामोक्तं व्रतं कृत्वा यथोदितम् । तदा

प्रभृति लोकेऽस्मिन्विश्रुतं हनुमद्व्रतम् ॥५६॥ भवेत् सहायो हनुमान् कृते तस्य व्रते शुभे । तस्मात्त्वयापि कर्त्तव्यं व्रतमेतन्नृपोत्तम ॥५७॥ मासानां मार्गशीर्षोऽहमित्युक्तं स्वामिना स्वयम् । तस्मात्त्वमपि तत्कृत्वा लब्धराज्यो भविष्यसि ॥५८॥ इत्याकर्ण्य वचस्तस्य सर्वेऽपि मुदमाययुः । अथ सायमभूत्तत्र सूर्ये वारांशिमागते ॥५९॥ नीत्वा रात्रिं ततः प्रात उत्थाय तपसः सुतः । व्यासस्य पुरतश्चक्रे व्रतमेतत्सुविस्तरम् ॥६०॥ उद्यापनं तथा होमं सघृतं पायसैः शुभैः । मूलमंत्रोक्त

---

१ वारांशिं जलराशिं समुद्रमित्यर्थः ।

सूक्तेन व्रताङ्गमकरोत्ततः॥६१॥साक्षाद्धनुमतः पूजा पांचाल्या सह कल्पिता।अथ संवत्सरेऽतीते पाण्डवो राज्यमाययौ॥६२॥ तस्मात्कुरुध्वं मुनयो व्रतानामु त्तमं व्रतम्। इतिकृत्वा भवन्तश्च प्राप्ताभीष्टमनोरथाः ॥६३॥तेपि चक्रुर्यथान्यायं व्रतमेतत्सुमङ्गलम् ।इति श्रीहनुमत्कल्पं लिखितं यस्य वेश्मनि ॥६४॥ कृते व्रते च यत्पुण्यं तत्पुण्यफलमश्नुते।पठते यो हनुमतः कल्पं यःशृणुयान्नरः॥६५॥ वाचयेद्यस्तु सद्भक्त्या स संपूर्णमनोरथः। वेदविद्ब्राह्मणः श्रीमान् क्षत्रियोमित विक्रमः॥६६॥वैश्योपि च धनाध्यक्षः शूद्रःकृषिमहा

धनः। रोगार्त्तो मुच्यते रोगात्सुतार्थी लभते सुतान्
॥६७॥ मोक्षार्थी लभते मोक्षं धनार्थी लभते धनम्॥इदं
व्रत नरःकृत्वा साङ्गोपाङ्गं हनूमतः ॥६८॥ॐ नमो
भगवते वायुनंदनायेति मंत्रतः॥ ६९ ॥ अभिमंत्र्य
त्रिवारं यो गन्धं हस्तेन लेपयेत् ।ललाटेधारयेद्यस्तु
तस्य लोको वशीभवेत् ॥७०॥धृत्वा ललाटे तिलकं
यो राजगृहमन्वगात् । नृपतिस्तस्य वशगः प्रत्यहं
जायते ध्रुवम् ॥ ७१ ॥ हनुमन्तं स्मरन्नाम प्रयाणं
यदि गच्छति। सर्वत्र विजयी भूत्वा पुनरागच्छति
ध्रुवम् ॥७२॥ हनुमत्कल्पमेतत्तु भक्तियुक्तः करोति

यः। राजद्वारे च युद्धे च सभायां व्यावहारिके॥७३॥
हुताशने च पवने व्याघ्रसिंहभयेषु च। समस्तकार्यो
द्योगे च सर्वत्र विजयी भवेत् ॥ ७४ ॥ त्रयोदश
ग्रंथियुक्तं व्रतदोरं हनूमतः। धारयेद्यः कंठमूले
दक्षिणेप्यथवा करे ॥ ७५ ॥ तस्य सर्वाभीष्टसिद्धि
र्भवत्येव नसंशयः। ब्राह्मणक्षत्रियविशां शूद्रादीनां
च सर्वशः॥७६॥व्रतंसंपत्करं शीघ्रं स्त्रीणां चैव विशे
षतः। सत्यं सत्यं पुनः सत्यं व्रतमेतद्विधानतः॥७७
नमस्ते नमस्ते महावायुसूनो नमस्ते नमस्ते भवि
ष्यद्विधातः। नमस्ते नमस्ते सदाभीष्टदातर्नमस्ते

नमस्तेऽनिशं रामभक्त ॥७८॥ इति श्रीभाविष्योत्तर पुराणे व्यासप्रोक्तहनुमद्व्रतकथा ॥ श्लोकाः १२९८॥

अथ हनुमद्व्रतोद्यापनकल्पः ॥ ऋषय ऊचुः ॥ सूत सूत पुनप्राज्ञ सर्वशास्त्रविशारद। हनुमद्व्रतमाहात्म्यं त्वया सम्यग्गुदीरितम् ॥१॥ उद्यापनविधिं सम्यकू सूत ना वक्तुमर्हसि । उद्यापनं विना नैव व्रतस्य फलहेतुकम् ॥ २ ॥ कर्तव्यं तु कथं भक्तैरखण्ड फलभोक्तृभिः । एतत्सर्वं समाचक्ष्व फलं च नियमं तथा ॥३॥ सूत उवाच ॥ शृण्वन्तु ऋषयः सर्वे व्रतस्योद्यापनक्रमम् । मार्गशीर्षे तथा माघे

वैशाखे श्रावणे तथा ॥ ४ ॥ कार्तिके फाल्गुने चैव मूढदोषविवर्जिते । आदौ मध्ये तथा चान्ते कुर्यादु द्यापनं बुधः॥५॥ शुक्लपक्षे त्रयोदश्यां पूर्वाह्णे स्नानमाचरेत् ।नित्यकर्म विधायादौ पूजास्थानं समाविशेत् ॥६॥ पुण्याहवाचनं कुर्याद्गीतवादित्रमंगलैः । आचार्यं वरयेत्पश्चाद्विधिज्ञं वेदपारगम्॥७॥ब्रह्माणं वरयेत्तत्र वेदवेदांगपारगम् । ऋत्विजश्चापि वरये त्रयोदशगुणान्वितान्॥८॥मण्डपं कारयेद्रम्यंचतुर्द्वारसमन्वितम्। कदलीस्तंभसंयुक्तं वितानाद्यैर्विराजितम्॥ ९ ॥ फलपुष्पसमायुक्तं तोरणाद्यैरलंकृतम्।

मण्डपस्य तु मध्ये च गोमयेनोपलिप्यते ॥ १० ॥
द्विषट्दलसमायुक्तं पद्मं च परिकल्पयेत् । चातुर्वर्ण
करंगैश्च स्वलंकृतं प्रयत्नतः ॥ ११ ॥ दलेषु स्थाप
येत्कुंभान् दद्यात्ताम्रमयाञ्छुभान् । पद्मस्य कर्णि
कायां तु सौवर्णं कलशं न्यसेत् ॥ १२ ॥ एषु कुं
भेषु वस्त्राणि प्रच्छाद्य सुसमाहितः । माषमात्रसुव
र्णेन तदर्धार्धेन वा पुनः ॥ १३ ॥ प्रतिमां कारयेत्तत्र
वायुपुत्रस्य धीमतः । वस्त्रद्वयेन संवेष्ट्य संस्थाप्य
कलशोपरि ॥ १४ ॥ पूर्ववत्पूजयेद्भक्त्या कल्पोक्त
विधिना ततः । सौवर्णं राजतं वापि तन्तुं कुर्याद्दृढं

नवम् ॥ १५ ॥ त्रयोदशग्रंथियुतं पूजयित्वा यथा विधि । यावज्जीवं ततो धार्यं सर्वसंपत्प्रदायकम् । ॥ १६॥ रात्रौ जागरणं कृत्वा प्रतियामं प्रपूजयेत् । ततः प्रभातसमये स्नानं कृत्वा यथाविधि ॥ १७ ॥ पूर्ववत्पूजयेद्देवं रामदूतं कपीश्वरम् । स्वगृह्योक्तवि धानेन प्रतिष्ठाप्यानलं द्विजः ॥ १८॥ क्षीराज्येन घृ तेनाज्यसमिद्भिः पिप्पलोद्भवैः । फलैर्नानाविधैः पक्वैर्मधुना च विशेषतः ॥१९॥ होमं कुर्यात्प्रयत्नेन मूलमन्त्रेण च व्रती । अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा ॥ २० ॥ होमशेषं ततः कृत्वा पूर्णाहुतिमथा

चरेत् । आचार्यं पूजयेत्पश्चाद्वस्त्रालंकारभूषणैः ॥ २१॥ ब्राह्मणानृत्विजश्चापि पूजयित्वा तथैव च । आचार्याय सुशांताय श्रोत्रियाय कुटुंबिने ॥ २२ ॥ प्रतिमां वस्त्रसंयुक्तां दद्याद्वै दक्षिणान्विताम् । कलशान्वस्त्रसंयुक्तानृत्विग्भ्यश्च प्रदापयेत् ॥ २३ ॥ व्रतस्यफलसिद्ध्यर्थं धेनुं दद्यात्पयस्विनीम् । हेमशृंगीं रौप्यखुरीं सवत्सां वस्त्रसंयुताम् ॥ २४॥ ब्रह्मणे दक्षिणां दत्त्वा ब्राह्मणान्भोजयेत्ततः । भुञ्जीयाद्बंधुभिः सार्धं वायुपुत्रं हृदि स्मरन् ॥ २५ ॥ एवं यः कुरुते मर्त्यः कामानिखिलमाप्नुयात् । पुत्रपौत्रैः परिवृतो धन

धान्यसमाकुलः ॥२६॥ इह भुक्त्वाखिलान्भोगान्
प्रसादाच्च हनूमतः । सर्वपापविनिर्मुक्तः स याति
ब्रह्मणः पदम् ॥ २७ ॥ एवं कृत्वा शौनकाद्याः संतु
ष्टाः स्वाश्रमं गताः । ये पठंतीदमाख्यानंशृण्वंति श्र
द्धयान्विताः ॥२८॥ ते सर्वे पापनिर्मुक्ता यास्यंति
परमां गतिम् ॥ २९ ॥ इति श्रीभविष्योत्तरपुराणे
सूतशौनकसंवादे हनुमद्व्रतोद्यापनकल्पः ॥ १०७ ॥
इति श्रीहरिकृष्णविनिर्मिते बृ० ध० उपासनास्तब०
हनुमद्व्रतपूजा-पंपापूजा-व्रतोद्यापनपूजापद्धतिकथो
धानानादिनिरूपणं षड्विंशम् ॥ श्लोकाः॥ १३२७ ॥

श्रीगणेशायनमः। अस्यश्रीहनुमत्सहस्रनामस्तोत्र
मन्त्रस्य ब्रह्माऋषिः हनुमान्देवताअनुष्टुप्छंदः शंबीं
जं मंशक्तिः श्रीहनुमत्प्रीत्यर्थं तद्दिव्यसहस्रनामाभि
रमुकसंख्यार्कपुष्पादिद्रव्यसमर्पणे विनियोगः। अ
थध्यानम्–उद्यदादित्यसंकाशमुदारभुजविक्रमम्।
कन्दर्पकोटिलावण्यं सर्वविद्याविशारदम् ॥ १ ॥
श्रीरामहृदयानन्दं भक्तकल्पमहीरुहम्। अभयं वरदं
दोर्भ्यां चिंतयेन्मारुतात्मजम् ॥२॥ इति ध्यानम् ॥
ततस्तत्तन्नामाभिः प्रत्येकं नमोन्तैरर्कपुष्पादिसमर्पणं
कुर्यात्–

१ हनुमतेनमः
२ श्रीप्रदायनमः
३ वायुपुत्रायनमः
४ रुद्रायनमः
५ अनघायनमः
६ अजरायनमः
७ अमृत्यवेनमः
८ वीरवीरायनमः
९ ग्रामवासायनमः
१० जनाश्रयायनमः
११ धनदायनमः
१२ निर्गुणायनमः
१३ कायायनमः
१४ वीरायनमः
१५ निधिपतयेनमः
१६ मुनयेनमः
१७ पिंगाक्षायनमः
१८ वरदायनमः
१९ वाग्मिनेनमः
२० सीताशोकविनाशनायनमः
२१ शिवायनमः
२२ शर्वायनमः
२३ परायनमः

२४ अव्यक्तायनमः
२५ व्यक्तव्यक्तायनमः
२६ रसाधरायनमः
२७ पिङ्गकेशायनमः
२८ पिंगरोम्णेनमः
२९ श्रुतिगम्यायनमः
३० सनातनायनमः
३१ अनादयेनमः
३२ भगवतेनमः
३३ देवायनमः
३४ विश्वहेतवेनमः
३५ निराश्रयायनमः

३६ आरोग्यकर्त्रेनमः
३७ विश्वेशायनमः
३८ विश्वनायकायनमः
३९ हरीश्वरायनमः
४० भर्गायनमः
४१ रामायनमः
४२ रामभक्तायनमः
४३ कल्याणायनमः
४४ प्रकृतिस्थिरायनमः
४५ विश्वंभरायनमः
४६ विश्वमूर्तयेनमः
४७ विश्वाकारायनमः

४८ विश्वदायनमः
४९ विश्वात्मनेनमः
५० विश्वासेव्यायनमः
५१ विश्वायनमः
५२ विश्वहरायनमः
५३ रवयेनमः
५४ विश्वचेष्टायनमः
५५ विश्वागम्यायनमः
५६ विश्वध्येयायनमः
५७ कलाधरायनमः
५८ प्लवंगमायनमः
५९ कपिश्रेष्ठायनमः

६० ज्येष्ठायनमः
६१ विद्यायनमः
६२ वनेचरायनमः
६३ बालायनमः
६४ वृद्धायनमः
६५ यूनेनमः
६६ तत्त्वायनमः
६७ तत्त्वगम्यायनमः
६८ सख्येनमः
६९ अजायनमः
७० अंजनीसूनवेनमः
७१ अव्यग्रायनमः

७२ ग्रामस्वांतायनमः
७३ धराधरायनमः
७४ भूर्लोकायनमः
७५ भुवर्लोकायनमः
७६ स्वर्लोकायनमः
७७ महर्लोकायनमः
७८ जनलोकायनमः
७९ तपसेनमः
८० अव्ययायनमः
८१ सत्यायनमः
८२ ओंकारगम्यायनमः
८३ प्रणवायनमः
८४ व्यापकायनमः
८५ अमलायनमः
८६ शिवायनमः
८७ धर्मप्रतिष्ठात्रेनमः
८८ रामेष्टायनमः
८९ फाल्गुनप्रियायनमः
९० गोष्पदिनेनमः
९१ कृतवारीशायनमः
९२ पूर्णकामायनमः
९३ धराधिपायनमः
९४ रक्षोघ्नायनमः
९५ पुंडरीकाक्षायनमः

९६ शरणागतवत्सलायनमः
९७ जानकीप्राणदात्रेनमः
९८ रक्षःप्राणापहारकायनमः
९९ पूर्णायनमः
१०० सत्यायनमः
१ पीतवाससेनमः
२ दिवाकरसमप्रभायनमः
३ द्रोणहर्त्रेनमः
४ शक्तिनेत्रेनमः
५ शक्तयेनमः
६ राक्षसमारकायनमः
७ रक्षोघ्नायनमः
८ रामदूतायनमः
९ शाकिनीजीविकाहराय०
११० भुभुकारहतारातयेनमः
११ गर्वायनमः
१२ पर्वतच्छेदनायनमः
१३ हेतवेनमः
१४ अहेतवेनमः
१५ प्रांशवेनमः
१६ विश्वभर्त्रेनमः
१७ जगद्गुरवेनमः
१८ जगन्नेत्रेनमः

१९ जगन्नाथायनमः
१२० जगदीशायनमः
२१ जनेश्वरायनमः
२२ जगच्छ्रितायनमः
२३ हरयेनमः
२४ श्रीशायनमः
२५ गरुडस्मयभञ्जकाय०
२६ पार्थध्वजायनमः
२७ वायुपुत्रायनमः
२८ अमितपुच्छायनमः
२९ अमितप्रभायनमः
१३० ब्रह्मपुच्छायनमः

३१ परब्रह्मणेनमः
३२ पुच्छरोमेष्टायनमः
३३ सुग्रीवादिस्तुतायनमः
३४ ज्ञानिनेनमः
३५ वानरायनमः
३६ वानरेश्वरायनमः
३७ कल्पस्थायिनेनमः
३८ चिरंजीविनेनमः
३९ प्रसन्नायनमः
१४० सदाशिवायनमः
४१ सन्नतायनमः
४२ सत्कृतायनमः

४३ युक्तयेनमः
४४ मुक्तिदायनमः
४५ कीर्तिनायकायनमः
४६ कीर्तयेनमः
४७ कीर्तिप्रदायनमः
४८ समुद्रायनमः
४९ श्रीप्रदायनमः
१५० शिवायनमः
५१ उदधिक्रमणायनमः
५२ देवायनमः
५३ संसारभयनाशनायनमः
५४ बालिबंधकृतेनमः
५५ विश्वजेत्रेनमः
५६ विश्वप्रतिष्ठितायनमः
५७ लङ्कारयेनमः
५८ कालपुरुषायनमः
५९ लङ्केशगृहभंजनायनमः
१६० भूतावासायनमः
६१ वासुदेवायनमः
६२ वसवेनमः
६३ त्रिभुवनेश्वरायनमः
६४ श्रीरामरूपायनमः
६५ कृष्णायनमः

६६ लङ्काप्रासादभंजकाय०

६७ कृष्णायनमः

६८ कृष्णस्तुतायनमः

६९ शान्तायनमः

१७० शान्तिदायनमः

७१ विश्वपावनायनमः

७२ विश्वभोक्रेनमः

७३ मारिघ्नायनमः

७४ ब्रह्मचारिणेनमः

७५ जितेन्द्रियायनमः

७६ ऊर्ध्वगायनमः

७७ लांगूलिनेनमः

७८ मालिनेनमः

७९ लांगूलाहतराक्षसाय०

१८० समीरतनुजायनमः

८१ वीरायनमः

८२ वीरमारायनमः

८३ जयप्रदायनमः

८४ जगन्मंगलदायनमः

८५ पुण्यायनमः

८६ पुण्यश्रवणकीर्तना-
यनमः

१८७ पुण्यकीर्तयेनमः
८८ पुण्यगीतयेनमः
८९ जगत्पावनपावनायनमः
१९० देवेशायनमः
९१ मितमारायनमः
९२ रामभक्तिविधायकायनमः
९३ धात्रेनमः
९४ ध्येयायनमः
९५ भगायनमः
९६ साक्षिणेनमः
९७ चेत्रेनमः
९८ चैतन्यविग्रहायनमः
९९ ज्ञानदायनमः
२०० प्राणदायनमः
१ प्राणायनमः
२ जगत्प्राणायनमः
३ समीरणायनमः
४ विभीषणप्रियायनमः
५ शूरायनमः
६ पिप्पलाश्रयायनमः
७ सिद्धिदायनमः
८ सिद्धाश्रयायनमः
९ कालायनमः
२१० कालभक्षकायनमः

११ भर्जितायनमः
१२ लंकेशनिधनस्थायिनेनमः
१३ लंकाविदाहकायनमः
१४ ईश्वरायनमः
१५ चंद्रसूर्याग्निनेत्रायनमः
१६ कालाग्रयेनमः
१७ प्रलयान्तकायनमः
१८ कपीनायनमः
१९ कपीशायनमः
२२० पुण्यराशयेनमः
२१ द्वादशराशिगायनमः
२२ सर्वाश्रयायनमः
२३ अप्रमेयात्मनेनमः
२४ रेवत्यादिनिवारकायनमः
२५ लक्ष्मणप्राणदात्रेनमः
२६ सीताजीवनहेतुकायनमः
२७ रामध्येयायनमः
२८ हृषीकेशायनमः
२९ विष्णुभक्तायनमः
२३० जटिनेनमः
३१ बलिनेनमः
३२ सिद्धायनमः
३३ देवारिदर्पघ्नेनमः
३४ होत्रेनमः

३५ धात्रेनमः
३६ कर्त्रेनमः
३७ जगत्प्रभवेनमः
३८ नगरग्रामपालायनमः
३९ शुद्धायनमः
२४० बुद्धायनयः
४१ निरंतनायनमः
४२ निरंजनायनमः
४३ निर्विकल्पायनमः
४४ गुणातीतायनमः
४५ भयंकरायनमः
४६ हनुमतेनमः
४७ दुराराध्यायनमः
४८ तपस्साध्यायनमः
४९ अमरेश्वरायनमः
२५० जानकीधनशोको-
त्थतापहर्त्रेनमः
५१ पराशरायनमः
५२ वाङ्मयायनमः
५३ सदसद्रूपायनमः
५४ कारणायनमः
५५ प्रकृतेःपरायनमः
५६ भाग्यदायनमः
५७ निर्मलायनमः

५८ नेत्रेनमः
५९ पुच्छलंकाविदाहकाय०
२६० पुच्छबद्धायनमः
६१ यातुधानायनमः
६२ यातुधानरिपुप्रियायनमः
६३ छायापहारिणेनमः
६४ भूतेशायनमः
६५ लोकेशायनमः
६६ सद्गतिप्रदायनमः
६७ प्लवंगेश्वरायनमः
६८ क्रोधायनमः

६९ क्रोधसंरक्तलोचनायनमः
२७० क्रोधहर्त्रेनमः
७१ तापहर्त्रेनमः
७२ भक्ताभयायनमः
७३ वरप्रदायनमः
७४ भक्तानुकंपिनेनमः
७५ विश्वेशायनमः
७६ पुरुहूतायनमः
७७ पुरंदरायनमः
७८ अग्नयेनमः
७९ विभावसवेनमः
२८० भास्वतेनमः

८१ यमायनमः
८२ निर्ऋतयेनमः
८३ वरुणायनमः
८४ वायुगतिमतेनमः
८५ वायवेनमः
८६ कुबेरायनमः
८७ ईश्वरायनमः
८८ रवयेनमः
८९ चन्द्रायनमः
२९० कुजायनमः
९१ सौम्यायनमः
९२ गुरवेनमः

९३ काव्यायनमः
९४ शनैश्चरायनमः
९५ राहवेनमः
९६ केतवेनमः
९७ मरुतेनमः
९८ होत्रेनमः
९९ धात्रेनमः
३०० हर्त्रेनमः
१ समीरजायनमः
२ मशकीकृतदेवारयेनमः
३ दैत्यारयेनमः
४ मधुसुदनायनमः

५ कामायनमः
६ कपर्येनमः
७ कामपालायनमः
८ कपिलायनमः
९ विश्वजीवनायनमः
३१० भागीरथीपदाम्भो-
जायनमः
११ सेतुबंधविशारदायनमः
१२ स्वाहाकारायनमः
१३ स्वधाकारायनमः
१४ हविषेनमः
१५ कव्यायनमः

१६ हव्यायनमः
१७ प्रकाशकायनमः
१८ स्वप्रकाशायनमः
१९ महावीरायनमः
३२० लघवेनमः
२१ अमितविक्रमायनमः
२२ भंडानोड्डानगतिमतेनमः
२३ सद्गतयेनमः
२४ पुरुषोत्तमायनमः
२५ जगदात्मनेनमः
२६ जगद्योनयेनमः
२७ जगदंतायनमः

२८ अनन्तकायनमः
२९ विपाप्मनेनमः
३३० निष्कलंकायनमः
३१ महतेनमः
३२ महदहंकृतयेनमः
३३ खायनमः
३४ वायवेनमः
३५ पृथिव्यैनमः
३६ आपायनमः
३७ वह्नयेमम:
३८ दिक्कालायनमः
३९ एकस्थायनमः

३४० क्षेत्रज्ञायनमः
४१ क्षेत्रहंत्रेनमः
४२ पल्वलीकृतसागरायनमः
४३ हिरण्मयायनमः
४४ पुराणायनमः
४५ खेचरायनमः
४६ भूचरायनमः
४७ मनसेनमः
४८ हिरण्यगर्भायनमः
४९ सुत्राम्णेनमः
३५० राजराजायनमः
५१ विषांपतयेनमः

५२ वेदांतवेद्यायनमः
५३ उद्गीथायनमः
५४ वेदायनमः
५५ वेदांगपारगायनमः
५६ प्रतिग्रामस्थितयेनमः
५७ सद्यःस्फूर्तिदात्रेनमः
५८ गुणाकारायनमः
५९ नक्षत्रमालिनेनमः
३६० भूतात्मनेनमः
६१ सुरभयेनमः
६२ कल्पपादपायनमः
६३ चिंतामणयेनमः
६४ गुणनिधयेनमः
६५ प्रजाद्वारायनमः
६६ अनुत्तमायनमः
६७ पुण्यश्लोकायनमः
६८ पुरारातयेनमः
६९ ज्योतिष्मतेनमः
३७० शर्वरीपतयेनमः
७१ किलिकिलिरावसंत्रस्तभूतप्रेतपिशाचकायनमः
७२ ऋणत्रयहरायनमः
७३ सूक्ष्मायनमः
७४ स्थूलायनमः

हनु.

१२०

७५ सर्वंगतयेनमः
७६ पुंसेनमः
७७ अपस्मारहरायनमः
७८ स्मत्रैनमः
७९ श्रुतयेनमः
३८० गाथायैनमः
८१ स्मृतयेनमः
८२ मनवेनमः
८३ स्वर्गद्वारायनमः
८४ प्रजाद्वारायनमः
८५ मोक्षद्वारायनमः
८६ यतीश्वरायनमः
८७ नादरूपायनमः
८८ परब्रह्मणेनमः
८९ ब्रह्मणेनमः
३९० ब्रह्मपुरातनायनमः
९१ एकायनमः
९२ अनेकायनमः
९३ जनायनमः
९४ शुक्लायनमः
९५ स्वयंज्योतिषेनमः
९६ अनाकुलायनमः
९७ ज्योतिज्योतिषेनमः
९८ अनादयेनमः

सह.

२२०

९९ सात्त्विकायनमः
४०० राजसायनमः
१ तमसेनमः
२ तमोहर्त्रेनमः
३ निरालंबायनमः
४ निराकारायनमः
५ गुणाकरायनमः
६ गुणाश्रयायनमः
७ गुणामयायनमः
८ बृहत्कायायनमः
९ बृहद्यशसेनमः
४१० बृहद्धनुषेनमः
११ बृहत्पादायनमः
१२ बृहन्मूर्ध्नेनमः
१३ बृहत्स्वनायनमः
१४ बृहत्कायायनमः
१५ बृहन्नासायनमः
१६ बृहद्बाहवेनमः
१७ बृहत्तनवेनमः
१८ बृहद्यत्नायनमः
१९ बृहत्कार्यायनमः
४२० बृहत्पुच्छायनमः
२१ बृहत्करायनमः
२२ बृहद्गतयेनमः

२३ बृहत्सेव्यायनमः
२४ बृहल्लोकायनमः
२५ फलप्रदायनमः
२६ बृहच्छक्तयेनमः
२७ बृहद्वाञ्छाफलदायनमः
२८ बृहदीश्वरायनमः
२९ बृहल्लोकनुतायनमः
४३० द्रष्ट्रेनमः
३१ विद्योद्गात्रेनमः
३२ जगद्गुरवेनमः
३३ देवाचार्यायनमः
३४ सत्यवादिनेनमः

३५ ब्रह्मवादिनेनमः
३६ कलाधरायनमः
३७ सप्तपातालगामिने नमः
३८ मलयाचलसंश्रयायनमः
३९ उत्तराशास्थितायनमः
४४० श्रीदायनमः
४१ दिव्यौषधिवशायनमः
४२ खगायनमः
४३ शाखामृगायनमः
४४ कपीन्द्रायनमः
४५ पुराणायनमः
४६ प्राणचंचुरायनमः

४७ चतुरायनमः
४८ ब्राह्मणायनमः
४९ योगिनेनमः
४५० योगगम्यायनमः
५१ परावरायनमः
५२ अनादयेनमः
५३ निधनायनमः
५४ व्यासाय नमः
५५ वैकुंठाय नमः
५६ पृथिवीपतये नमः
५७ अपराजितये नमः
५८ जितारातये नमः
५९ सदानंददाय नमः
४६० ईशित्रे नमः
६१ गोपालाय नमः
६२ गोपतये नमः
६३ योध्रे नमः
६४ कलये नमः
६५ कालाय नमः
६६ परात्पराय नमः
६७ मनोवेगिने नमः
६८ सदायोगिने नमः
६९ संहारभयनाशनाय नमः
४७० तत्त्वदात्रे नमः

७१ तत्त्वज्ञाय नमः
७२ तत्त्वाय नमः
७३ तत्त्वप्रकाशाय नमः
७४ शुद्धाय नमः
७५ बुधाय नमः
७६ नित्ययुक्ताय नमः
७७ भक्ताकारायनमः
७८ जगद्रथायनमः
७९ प्रलयायनमः
४८० अमितमायायनमः
८१ मायातीतायनमः
८२ विमत्सरायनमः
८३ मायानिर्जितरक्षसेनमः
८४ मायानिर्मितविष्टपाय॰
८५ मायाश्रयायनमः
८६ निर्लेपायनमः
८७ मायानिवर्त्तकायनमः
८८ सुखायनमः
८९ सुखासुखप्रदायनमः
४९० नागायनमः
९१ महेशकृतसंस्तवायनमः
९२ महेश्वरायनमः
९३ सत्यसंधायनमः
९४ शरभायनमः

९५ कलिपावनायनमः
९६ रसायनमः
९७ रसज्ञायनमः
९८ सन्मानायनमः
९९ रूपायनमः
५०० चक्षुषेनमः
१ स्तुतयेनमः
२ रवायनमः
३ प्राणायनमः
४ गन्धायनमः
५ स्पर्शायनमः
६ स्पर्शनायनमः

७ अहंकारमानगायनमः
८ नेतिनेतीतिगम्यायनमः
९ वैकुंठभजनप्रियायनमः
१० गिरीशायनमः
११ गिरिजाकांतायनमः
१२ दुर्वाससेनमः
१३ कवयेनमः
१४ अंगिरसेनमः
१५ भृगवेनमः
१६ वासिष्ठायनमः
१७ च्यवनायनमः
१८ नारदायनमः

२२३

१९ तुंबरायनमः
५२० अमलायनमः
२१ विश्वक्षेत्रायनमः
२२ विश्वबीजायनमः
२३ विश्वनेत्रायनमः
२४ विश्वपायनमः
२५ याजकायनमः
२६ यजमानायनमः
२७ पावकायनमः
२८ पित्रेनमः
२९ श्रद्धायैनमः
५३० बुद्धयैनमः



३१ क्षमायैमनः
३२ तंद्रायैनमः
३३ मंत्रायनमः
३४ मंत्रायित्रेनमः
३५ सुरायनमः
३६ राजेन्द्रायनमः
३७ भूपतयेनमः
३८ रुंडमालिनेनमः
३९ संसारसारथयेनमः
५४० नित्यायनमः
४१ संपूर्णकामायनमः
४२ भक्तकामदुघेनमः

२२३

४३ उत्तमायनमः
४४ गणपायनमः
४५ केशवायनमः
४६ भ्रात्रेनमः
४७ पित्रेनमः
४८ मात्रेनमः
४९ मारुतयेनमः
५५० सहस्रमूर्ध्नेनमः
५१ सहस्रास्यायनमः
५२ सहस्राक्षायनमः
५३ सहस्रपादायनमः
५४ कामजितेनमः
५५ कामदहनायनमः
५६ कामायनमः
५७ काम्यफलप्रदायनमः
५८ मुद्रापहारिणेनमः
५९ रक्षोघ्नायनमः
५६० क्षितिभारहरायनमः
६१ अकलायनमः
६२ नखदंष्ट्रायुधायनमः
६३ विष्णवेनमः
६४ भक्ताभयवरप्रदायनमः
६५ दर्पघ्नेनमः
६६ दर्पदायनमः

६७ इष्टायनमः
६८ शतमूर्त्तयेनमः
६९ अमूर्त्तिमतेनमः
५७० महानिधयेनमः
७१ महाभागायनमः
७२ महागर्भायनमः
७३ महर्द्धिदायनमः
७४ महाकारायनमः
७५ महायोगिनेनमः
७६ महातेजसेनमः
७७ महाद्युतयेनमः
७८ महाकर्मणेनमः

७९ महानादायनमः
५८० महामंत्रायनमः
८१ महामतयेनमः
८२ महाशयायनमः
८३ महोदरायनमः
८४ महादेवात्मकायनमः
८५ विभवेनमः
८६ रुद्रकर्मणेनमः
८७ अकृतकर्मणेनमः
८८ रत्ननाभायनमः
८९ कृतागमायनमः
५९० अंभोनिधिलंघनायनमः

९१ सिंहायनमः
९२ सत्यधर्मायनमः
९३ प्रमोदनायनमः
९४ जितामित्रायनमः
९५ जयायनमः
९६ सोमायनमः
९७ विजयायनमः
९८ वायुवाहनायनमः
९९ जीवायनमः
६०० धात्रेनमः
१ सहस्रांशवेनमः

२ मुकुंदायनमः
३ भूरिदाक्षिणायनमः
४ सिद्धार्थायनमः
५ सिद्धिदायनमः
६ सिद्धसंकल्पायनमः
७ सिद्धिहेतुकायनमः
८ सप्तपातालचरणायनमः
९ सप्तर्षिगणवंदितायनमः
६१० सप्ताब्धिलंघनायनमः
११ वीरायनमः
१२ सप्तद्वीपोरुमंडलायनमः

१३ सप्तांगराज्यसुखदाय०
१४ सप्तमातृनिवेशितायनमः
१५ सप्तस्वर्लोकमुकुटायनमः
१६ सप्तहोत्रेनमः
१७ स्वराश्रयायनमः
१८ सप्तच्छंदायनमः
१९ निधयेनमः
६२० सप्तच्छंदसेनमः
२१ सप्तजनाश्रयायनमः
२२ सप्तसामायनमः
२३ उपगीतायनमः

२४ सप्तपातालसंश्रयायनमः
२५ बलभीमायनमः
२६ पातालदेवताहंत्रेनमः
२७ शास्त्रेनमः
२८ चातुर्यसागरायनमः
२९ उद्यद्दक्षिणदोर्दंडायनमः
६३० चपलांगायनमः
३१ प्रतोषकायनमः
३२ वैष्णवायनमः
३३ विश्वरूपात्मनेनमः
३४ वनारयेनमः

३५ कल्पभूरुहायनमः
३६ लोहितांगायनमः
३७ गदापाणयेनमः
३८ धूर्त्तायनमः
३९ सिंदूरलेपनायनमः
६४० कोटिकंदर्पसौंदर्यायनमः
४१ कपिवृंदप्रपूजितायनमः
४२ रुद्रावतारायनमः
४३ गंभीरायनमः
४४ गंभीरध्वानसंभवायनमः
४५ सामवैकशिरोरत्नायनमः

४६ गानविद्याप्रकाशकाय०
४७ स्वर्णयज्ञोपवीतिनेनमः
४८ कुमारायनमः
४९ ब्रह्मदीक्षितायनमः
६५० अश्रमायनमः
५१ परमोत्साहायनमः
५२ ऐश्वर्योदार्यसागरायनमः
५३ पंचाननायनमः
५४ विराडात्मनेनमः
५५ स्वराजेनमः
५६ एकादशाननायनमः

१३ सप्तांगराज्यसुखदाय०
१४ सप्तमातृनिवेशितायनमः
१५ सप्तस्वर्लोकमुकुटायनमः
१६ सप्तहोत्रेनमः
१७ स्वराश्रयायनमः
१८ सप्तच्छंदायनमः
१९ निधयेनमः
६२० सप्तच्छंदसेनमः
२१ सप्तजनाश्रयायनमः
२२ सप्तसामायनमः
२३ उपगीतायनमः
२४ सप्तपातालसंश्रयायनमः
२५ बलभीमायनमः
२६ पातालदेवताहंत्रेनमः
२७ शास्त्रेनमः
२८ चातुर्यसागरायनमः
२९ उद्यद्दक्षिणदोर्दंडायनमः
६३० चपलांगायनमः
३१ प्रतोषकायनमः
३२ वैष्णवायनमः
३३ विश्वरूपात्मनेनमः
३४ वनारयेनमः

३५ कल्पभूरुहायनमः
३६ लोहितांगायनमः
३७ गदापाणयेनमः
३८ धूर्त्तायनमः
३९ सिंदूरलेपनायनमः
६४० कोटिकंदर्पसौंदर्यायनमः
४१ कपिवृंदप्रपूजितायनमः
४२ रुद्रावतारायनमः
४३ गंभीरायनमः
४४ गंभीरध्वानसंभवायनमः
४५ सामगैकशिरोरत्नायनमः
४६ गानविद्याप्रकाशकाय०
४७ स्वर्णयज्ञोपवीतिनेनमः
४८ कुमारायनमः
४९ ब्रह्मदीक्षितायनमः
६५० अश्रमायनमः
५१ परमोत्साहायनमः
५२ ऐश्वर्यौदार्यसागरायनमः
५३ पंचाननायनमः
५४ विराडात्मनेनमः
५५ स्वराजेनमः
५६ एकादशाननायनमः

६५७ विधिस्तुतायनमः
६५८ कृपामूर्त्तयेनमः
६५९ रामहृदेनमः
६६० भक्तवत्सलायनमः
६६१ अदाह्यायनमः
६६२ अच्छेद्यायनमः
६६३ आधारायनमः
६६४ वज्राङ्गायनमः
६६५ भुजविक्रमायनमः
६६६ श्रीरामहृदयानन्दायनमः
६६७ चिरायुषेनमः
६६८ पूर्णपिंडजायनमः
६६९ ध्यानशीलायनमः
६७० प्रशांतात्मनेनमः
७१ रामनामामृताशनायनमः
७२ मेघरूपायनमः
७३ मेघवृष्टिनिवारकायनमः
७४ मेघजीवनहेतवेनमः
७५ मेघश्यामायनमः
७६ परात्मकायनमः
७७ समीरतनयायनमः
७८ बोद्धेनमः

७९ तत्त्वविद्याविशारदाय०
६८० अमोघायनमः
८१ अमोघदृष्टयेनमः
८२ दिष्टदायनमः
८३ अनिष्टनाशायनमः
८४ अर्थायनमः
८५ अनर्थापहारिणेनमः
८६ समर्थायनमः
८७ रामसेवकायनमः
८८ अर्थिनेनमः
८९ धन्यायनमः
६९० सुराराातयेनमः
९१ पुंडरीकाक्षायनमः
९२ आत्मभुवेनमः
९३ संकर्षणायनमः
९४ विशुद्धात्मनेनमः
९५ विद्याराशयेनमः
९६ सुरेश्वरायनमः
९७ अचलोद्धारकायनमः
९८ नित्यायनमः
९९ सेतुकृतेनमः
७०० रामसारथयेनमः

१ आनंदायनमः
२ परमानन्दायनमः
३ मत्स्यायनमः
४ कूर्मायनमः
५ निधयेनमः
६ शूरायनमः
७ वराहायनमः
८ नारसिंहायनमः
९ वामनायनमः
७१० जमदाग्निजायनमः
११ रामायनमः

१२ कृष्णायनमः
१३ शिवायनमः
१४ बुद्धायनमः
१५ कल्किनेनमः
१६ रामाश्रयायनमः
१७ हरायनमः
१८ नंदिनेनमः
१९ शृङ्गिणेनमः
७२० चंडिनेनमः
२१ गणेशायनमः
२२ गणसेवितायनमः

२३ कर्माध्यक्षायनमः
२४ सुरारामायनमः
२५ विश्रामायनमः
२६ जगतीपतयेनमः
२७ जगन्नाथायनमः
२८ कपीशायनमः
२९ सर्वावासायनमः
७३० सदाश्रयायनमः
३१ सुग्रीवादिस्तुताय०
३२ दांतायनमः
३३ सर्वकर्मणेनमः

३४ प्लवंगमायनमः
३५ नखादारितरक्षसेनमः
३६ नखयुद्धविशारदायनमः
३७ कुशलायनमः
३८ सुधनायनमः
३९ शेषायनमः
७४० वासुकयेनमः
४१ तक्षकायनमः
४२ सुवर्णवर्णायनमः
४३ बलाढ्यायनमः
४४ पुरजत्रनमः

४५ अघनाशनायनमः
४६ कैवल्यदीपायनमः
४७ कैवल्यायनमः
४८ गरुडायनमः
४९ पन्नगायनमः
७५० गुरवेनमः
५१ क्लिक्लिरावहतारातये०
५२ गर्वायनमः
५३ पर्वतभेदनायनमः
५४ वज्राङ्गायनमः
५५ वज्रवज्रायनमः

५६ भक्तायनमः
५७ भक्तवज्रानिवारणायनमः
५८ नखायुधायनमः
५९ मणिग्रीवायनमः
७६० ज्वालिनेनमः
६१ मालिनेनमः
६२ भास्करायनमः
६३ प्रौढप्रतापायनमः
६४ ह्लपनायनमः
६५ भक्ततापनिवारकायनमः
६६ शरणायनमः

६७ जीवनायनमः
६८ भोक्त्रेनमः
६९ नानाचेष्टायनमः
७७० चंचलायनमः
७१ स्वस्थायनमः
७२ अस्वास्थ्यघ्नेनमः
७३ दुःखशांतनायनमः
७४ पवनात्मजायनमः
७५ पावनायनमः
७६ पवनायनमः
७७ कांतायनमः
७८ भक्तांगायनमः
७९ सहनाय नमः
७८० बलाय नमः
८१ मेघनादरिपवे नमः
८२ मेघनादसंहतराक्ष-
साय नमः
८३ क्षराय नमः
८४ अक्षराय नमः
८५ विनीतात्मने नमः
८६ वानरेशाय नमः
८७ सतांगतये नमः

८८ श्रीकंठाय नमः

८९ शितिकंठाय नमः

७९० सहायायनमः

९१ असहनकायनमः

९२ अस्थूलायनमः

९३ अनणवेनमः

९४ भर्गायनमः

९५ देवायनमः

९६ संसृतिनाशायनमः

९७ अध्यात्मविद्यायनमः

९८ सारायनमः

९९ अध्यात्मकुशलायनमः

८०० सुधियेनमः

१ अकल्मषायनमः

२ सत्यहेतवेनमः

३ सत्यदायनमः

४ सत्यगोचरायनमः

५ सत्यगर्भायनमः

६ सत्यरूपायनमः

७ सत्यायनमः

८ सत्यपराक्रमायनमः

९ अञ्जनीप्राणलिंगायनमः

८१० वायुवंशोद्वहायनमः
११ अश्रुतयेनमः
१२ भद्ररूपायनमः
१३ सुरूपायनमः
१४ चित्ररूपधृषेनमः
१५ मैनाकवंदितायनमः
१६ सूक्ष्मदर्शनायनमः
१७ विजयायनमः
१८ जयायनमः
१९ क्रांतादिङ्मण्डलायनमः
८२० रुद्रायनमः
२१ प्रकटीकृतविक्रमायनमः
२२ कंबुकंठायनमः
२३ प्रसन्नात्मनेनमः
२४ ह्रस्वनासायनमः
२५ वृकोदरायनमः
२६ लम्बोष्ठायनमः
२७ कुंडलिनेनमः
२८ चित्रमालिनेनमः
२९ योगविदांवरायनमः
८३० विपश्चितेनमः
३१ कवयेनमः

३२ आनन्दविग्रहायनमः
३३ अनन्यशासनायनमः
३४ फल्गुनीसूनवेनमः
३५ अव्यग्रायनमः
३६ योगात्मनेनमः
३७ योगतत्परायनमः
३८ योगविदेनमः
३९ योगकर्त्रेनमः
८४० योगयोनयेनमः
४१ दिगम्बरायनमः
४२अकारादिहकारान्ताय०

४३ वर्णनिर्मितायनमः
४४ विग्रहायनमः
४५ उलूखलमुखायनमः
४६ सिद्धायनमः
४७ संस्तुतायनमः
४८ प्रथमेश्वरायनमः
४९ श्लिष्टजंघायनमः
८५० श्लिष्टपाणयेनमः
५१ श्लिष्टजानवेनमः
५२ शिखाधरायनमः
५३ सुशर्मणेनमः

५४ अमितशर्मिणेनमः
५५ नारायणपरायणाय०
५६ जिष्णवेनमः
५७ भविष्णवेनमः
५८ रोचिष्णवेनमः
५९ ग्रसिष्णवेनमः
८६० स्थास्नवेनमः
६१ हरयेनमः
६२ रुद्रानुकृतेनमः
६३ वृक्षकंपनायनमः
६४ भूमिकंपनायनमः
६५ गुणप्रवाहायनमः
६६ सूत्रात्मनेनमः
६७ वीतरागायनमः
६८ स्तुतिप्रियायनमः
६९ नागकन्याभयध्वंसिने०
७० ऋतुपर्णायनमः
७१ कपालभृतेनमः
७२ अनाकुलायनमः
७३ भगायनमः
७४ अपायायनमः
७५ अनपायायनमः

७६ वेदपारगायनमः
७७ अक्षरायनमः
७८ पुरुषायनमः
७९ लोकनाथायनमः
८८० ऋक्षप्रभवेनमः
८१ दृढायनमः
८२ अष्टांगयोगायनमः
८३ फलभुवेनमः
८४ सत्यसंधायनमः
८५ पुरुष्टुतायनमः
८६ श्मशानस्थाननिलयाय

८७ प्रेतविद्रावणायनमः
८८ श्रमायनमः
८९ पञ्चाक्षरपरायनमः
८९० पञ्चमातृकायनमः
९१ रञ्जनायनमः
९२ ध्वजायनमः
९३ योगिनेनमः
९४ वृंदवंद्यायनमः
९५ श्रियायनमः
९६ शत्रुघ्नायनमः
९७ अनन्तविक्रमायनमः

९८ ब्रह्मचारिणेनमः
९९ इन्द्रियारिपवेनमः
१०० धृतदण्डायनमः
१ दशात्मकायनमः
२ अप्रपंचायनमः
३ सदाकारायनमः
४ शूरसेनाविदारकायनमः
५ वृद्धायनमः
६ प्रमोदायनमः
७ आनन्दायनमः
८ सप्तजिह्वपतयेनमः

९ धरायनमः
११० नवद्वारपुराधारायनमः
११ प्रत्यग्रायनमः
१२ सामगायकायनमः
१३ षट्चक्रधाम्नेनमः
१४ स्वर्लोकायनमः
१५ भयहृतेनमः
१६ नामदायनमः
१७ अमदायनमः
१८ सर्ववश्यकरायनमः
१९ शक्तयेनमः

१२० अनन्तायनमः
२१ अनन्तमङ्गलायनमः
२२ अष्टमूर्तिधरायनमः
२३ नेत्रेनमः
२४ विरूपायनमः
२५ स्वरसुन्दरायनमः
२६ धूम्रकेतवेनमः
२७ महाकेतवेनमः
२८ सत्यकेतवेनमः
२९ महारथायनमः
१३० नन्दीप्रियायनमः

३१ स्वतन्त्रायनमः
३२ मेखलिनेनमः
३३ डमरुप्रियायनमः
३४ लोहांगायनमः
३५ सर्वविदेनमः
३६ धान्विनेनमः
३७ खड्गदायनमः
३८ शर्वायनमः
३९ ईश्वरायनमः
१४० फलभुजेनमः
४१ फलहस्तायनमः

४२ सर्वकर्मफलप्रदायनमः
४३ धर्माध्यक्षायनमः
४४ धर्मफलायनमः
४५ धर्मायनमः
४६ धर्मप्रदायनमः
४७ अर्थदायनमः
४८पञ्चविंशतितत्त्वज्ञायनमः
४९ तारकब्रह्मतत्पतयेनमः
९५० त्रिमार्गवसतिनेनमः
५१ भीमायनमः
५२ सर्वदुष्टनिबर्हणायनमः

५३ ऊर्जस्वितेनमः
५४ निष्कलायनमः
५५ शूलिनेनमः
५६ मालिनेनमः
५७ गर्जायनमः
५८ निशाचरायनमः
५९ रक्ताम्बरधरायनमः
९६० रक्तायनमः
६१ रक्तमालाविभूषणायनमः
६२ वनमालिनेनमः
६३ शुभांगायनमः

६४ श्वेतायनमः
६५ श्वेतांबरायनमः
६६ यूनेनमः
६७ जयायनमः
६८ अजेयायनमः
६९ परीवादायनमः
१७० सहस्रवदनायनमः
७१ कवयेनमः
७२ शाकिनीडाकिनीयक्षर-
क्षोभूतप्रभञ्जकायनमः
७३ सद्योजातायनमः

७४ कायगतयेनमः
७५ ज्ञानमूर्त्तयेनमः
७६ यशस्करायनमः
७७ शंभुतेजसेनमः
७८ सार्वभौमायनमः
७९ विष्णुभक्तायनमः
१८० प्लवंगमायनमः
८१ चतुर्नवतिमन्त्रज्ञायनमः
८२ पौलस्त्यबलदर्पघ्नेनमः
८३सर्वलक्ष्मीप्रदायनमः
८४ श्रीमतेनमः

८५ अंगदप्रियायनमः

८६ ईतिनुदेनमः

८७ स्मृतयेनमः

८८ बीजायनमः

८९ सुरेशायनमः

९९० संसारभयनाशनायनमः

९१ उत्तमायनमः

९२ श्रीपरिवारायनमः

९३ श्रीभुवेनमः

९४ उग्रायनमः

९५ कामदुघेनमः

९६ तारकायनमः

९७ भगवतेनमः

९८ त्रात्रेनमः

९९ स्वस्तिदात्रेनमः

१००० सुमंगलायनमः

अनेन सहस्रनाम्नाऽमुकद्रव्यसमर्पणेन श्रीहनुमद्देवताप्रीयताम् ॥ इति श्री-
बृ० ध० उपासनास्तबके हनुमदुपासनाध्याये हनुमत्सहस्रनामावली
निरूपणं नाम सप्तविंश प्रकरणम् ॥ २७ ॥

अथ हनुमज्जन्ममाहात्म्यकथा ॥ अथ ते संप्रव
क्ष्यामि जयंतीव्रतमुत्तमम्। पुरा तु केसरीनाम वानरो
वानरर्षभः ॥ १ ॥ तस्य भार्याञ्जनीनाम ऋष्यमूक
गिरौ तपः। चकार सुमहद्घोरं सप्तवर्षसहस्रकम्
॥ २॥ तपसा तेन संतुष्टः शंभूवाच वरं वृणु। सापि
वव्रे यशस्वन्तं महाभक्तं महाबलम् ॥ ३ ॥ वज्रदेहं
पुत्रवरमुमाकान्तस्तदाब्रवीत्। एकादशो महारुद्र
स्तव पुत्रो भविष्यति॥४॥ हस्ताञ्जलिं प्रसार्यैव मम
ध्यानपरा भव। नेत्रे पिधाय तिष्ठस्व वायुश्चात्राग
मिष्यति ॥ ५ ॥ तवाञ्जलौ प्रसादं च दत्त्वान्तर्धान

मेष्यति । तत्प्रसादं भक्षयित्वा तव पुत्रो भविष्याति
॥६॥इत्युक्त्वान्तर्दधे शंभुः साञ्जनी तत्र संस्थिता ।
एतस्मिन्नन्तरे राज्ञो यज्ञे दशरथस्य च ॥७॥ कैके
यीहस्ततः पिण्डे जहार चिल्लिपाक्षिणी । गच्छन्त्या
काशमार्गेण तदा वायुर्महानभूत् ॥ ८ ॥ तुण्डात्प्र
गलिते पिंडे वायुर्नीत्वाञ्जलौञ्जनेः । क्षिप्तवान्सापि तं
पिण्डं भक्षयामास तत्क्षणात् ॥९॥नवमासे गते पुत्रं
सुषुवे साञ्जनी शुभम् । चैत्रे मासि सिते पक्षे पौर्ण
मास्यां कुजेऽहनि ॥ १० ॥ मौञ्जीमेखलया युक्तः
कौपीनपरिधारकः । कर्णयोः कुण्डले प्रातस्तथा यज्ञो

 



पवीतकम् ॥ ११ ॥ प्रवालसदृशो वर्णो मुखे पुच्छे च रक्तकः । एवं वानररूपेण प्रकटोऽभूत्क्षुधातुरः ॥ १२ ॥ आलोकयन्दशादिशं क्षुधाक्रान्तस्तदाञ्जनी । अन्तर्गृहे जगामाशु फलानयनकाम्यया ॥ १३ ॥ तदा तु क्षुधितो बालो रुदन्दृष्ट्वार्कमण्डलम् । आरक्तं च फलं मत्वा चोत्पपातातिचञ्चलः ॥ १४ ॥ जगर्ज सिंहवन्नादं करपादौ प्रसार्य च । सहाचला भुवश्चेलुर्दिशः सर्वाः प्रजज्वलुः ॥ १५ ॥ तदा स चाञ्जनीपुत्रो मनोवेगेन मारुतिः । मुखं प्रसार्य निकटं ययौ सूर्यस्य चाञ्जसा ॥ १६ ॥ तत्रैव सिंहिकापुत्रं ग्रसन्तमिव दारुणम् ।

पुच्छेन ताडयामास सोऽपतद्भयविह्वलः ॥ १७॥ पुर
न्दरमथागत्य पुच्छदुःखं निवेदयत् । श्रुत्वाश्चर्यंतदा
चेन्द्रो वज्रमादाय सत्वरम् ॥ १८ ॥ देवसेनासमा
युक्तो सराहुस्तत्र चाययौ । एतस्मिन्नंतरे वायुनन्दनः
सूर्यमण्डलम् ॥ १९ ॥ हस्ते गृहीत्वा नैवास्ति फल
मित्याहमारुतिः । त्यक्त्वार्कमंडलं पश्चान्मातुर्निक
टमाययौ ॥२०॥ तदा तु मार्गमध्येन्द्रं राहुं देवगणैः
सह । युद्धोद्यतं च दृष्ट्वैव क्रोधसंरक्तलोचनः ॥२१ ॥
राहुं च ताडयामास सेन्द्रान्देवगणाँस्तथा । जघान
क्षणमात्रेण युद्धं कृत्वा सुदारुणम् ॥२२॥ ददातिव्या

कुलश्चेन्द्रो गृहीत्वावज्रमुत्तमम्। जघान वायुपुत्रस्य हनुदेशे महाबलः ॥ २३ ॥ हाहाकारस्तदा चासीत पतिते वायुनन्दने। मूर्च्छितं च सुतं दृष्ट्वा वायुः क्रोध समाकुलः ॥ २४ ॥ उवाच वचनं तत्र देवानां तत्र शृण्वताम्। येन मे घातितोबालस्तमिन्द्रं घातयाम्य हम्॥२५॥ अहं सर्वस्य जगतः प्राणवायुर्न संशयः। इत्युक्त्वाऽऽकर्षयामास श्वासोच्छ्वासं त्रिलोकजम् ॥ २६॥ तदा व्याकुलिताः सर्वा ब्रह्मरुद्रादिदेवताः। क्षणात्तत्र समागत्य वायुं प्रोवाच पद्मभूः ॥ २७ ॥ पुत्रमुद्दिश्य जगतां नाशं कस्मात्करोषि हि । वायु

रुवाच ॥ नोत्थितो यदि मे पुत्रस्तदा हन्मि क्षणात्
सुरान् ॥२८ ॥ वायोर्वचनमाकर्ण्य विष्णुर्वचनमब्र
वीत् । पूर्णपिण्डात्समुत्पन्नस्तव पुत्रोतिनिर्भयः ।२९।
ब्रह्मणः कल्पपर्यंतं चिरंजीवी भविष्यति । शिवउ
वाच ॥ मम नेत्रसमुत्पन्नश्चाग्निःसर्वान्दहिष्यति।३०।
तथापि तव संतानं नैव बाधां करिष्यति । शूलादि
मम शस्त्राणि यानि मान्यानि मे तथा ॥३१॥ ब्रह्मो
वाच ॥ ब्रह्मास्त्रं ब्रह्मदण्डश्च ब्रह्मशापस्तथैव च । अ
न्यानि मम शस्त्राणि न बाधन्ते सुतं तव ॥३२॥ इन्द्र
उवाच ॥ मम शस्त्रवरं वज्रं नैव बाधां करिष्यति ।

अस्य वज्रसमोदेहोभविष्यातिनसंशयः ॥३३॥ हनौ चपतितं वज्रं हनुमान्नामनामतः । कुबेर उवाच॥बहुधा चासुरक्षयस्तवपुत्राद्भविष्यति ॥३४॥ यम उवाच ॥ कालदण्डाद्भयं नैव तव सूनोर्भविष्यति । वरुण उवाच ॥ भो वायो तव पुत्रस्य मम शक्तिर्भविष्यति ॥ ३५ ॥ युद्धं कुर्वञ्च्छ्रमस्तत्र न कदाचिद्भविष्यति । अम्लानपङ्कजां मालां विश्वामित्रो ददौ मुदा ॥३६॥ एवं देवा वरं दत्त्वा स्वं स्वं धामययुस्ततः । वायुः स्वपुत्रमादाय चाञ्जनीनिकटं ययौ ॥ ३७ ॥ अंजनी मारुतिं वीक्ष्यरुदन् प्रेम्णा ततःपरम् । स्वाङ्के

निवेश्य चालिङ्ग्य·प्रेम्णास्तनमपाययत् ॥३८॥एवं ते हनुमज्जन्म कथितं च समासतः । जयंतीदिनमासाद्य निराहारो जितेन्द्रियः ॥३९॥ पूजां च महतीं कृत्वा रात्रौ जागरणं चरेत् । गीतवाद्यकथालापैर्नामसंकीर्त्तनादिभिः ॥४०॥ हनुमन्नाटककथाप्रसंगेन विशेषतः । ब्राह्मणान् भोजयेत्प्रातः स्वयं भुंजीत वाग्यतः ॥ ४१ ॥ पठनाच्छ्रवणाच्चैव हनुमद्भक्तिमान् भवेत् ॥ ४२ ॥ चैत्रस्य शुक्लैकादश्यां मारुतेर्जन्म चोचिरे । तत्कल्पभेदाविषयो विज्ञेयो नात्र संशयः ॥ ४३ ॥ इति श्रीहरिकृष्णविनिर्मिते बृ० घ० उपा

सनास्तबके हनुमदुपासनाध्याये हनुमज्जयंतीव्रतक थानिरूपणं नाम अष्टाविंशंप्रकरणम् ॥ २८ ॥

अथ ग्रंथालंकारः ॥ श्रीमद्भाजसनेयगौतमकुलोत्प न्नोऽतिविद्यावतांमान्यो गुर्जरपण्डितोपपदकौदीच्यः सहस्राह्वकः । ज्योतिःशास्त्रविशारदोऽतिमतिमाञ्छ्री व्यङ्कटाख्यो द्विजस्तज्जो वै हरिकृष्णसंज्ञक इमं चक्रे विदां प्रीतये ॥ १ ॥ दक्षिणे सुमहाराष्ट्रदेशे देव गिरेः पुरः । औरंगाबादनगरं चास्ति तत्र जनिर्मम ॥ २ ॥ प्रार्थये सर्वविदुषां क्षमध्वं मेऽपराधकम् । यद्यत्र कुकृतं वास्यादधिकं यत्रकुत्राचित् ॥ ३ ॥ रोषमुत्सृज्य

तत्सर्वं निर्मलं कुरुतादरात् । अत्रावशिष्टो यो भागः स तु शेषे भविष्यति ॥ ४ ॥ इति श्रीमज्ज्योतिर्वित्कुलावतंसव्यङ्कटरामात्मजहरिकृष्णविनिर्मिते बृहज्ज्योतिषार्णवेऽष्टमे धर्मस्कंधे तृतीय उपासनास्तबके हनुमदुपासनानिरूपणं नाम चतुर्दशोत्तरशततमोऽध्यायः ॥ ११४॥ श्लोकाः ॥ १४३९ ॥ समुदितग्रन्थसंख्याः ॥ २७०० ॥

समाप्तश्चायं हनुमदुपासनाध्यायः ॥

( अथाग्रे श्रीसीतोपासनाध्यायो भविष्यति )

इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मज
गङ्गाविष्णुना स्वकीये " लक्ष्मीवेङ्कटेश्वर "
मुद्रणालये मुद्रयित्वा प्रकाशितम् ।
संवत् १९८५, शके १८५०

पुस्तक मिलनेका ठिकाना–

गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेङ्कटेश्वर" स्टीम् प्रेस,
कल्याण–मुंबई.

खेमराज श्रीकृष्णदास,
" श्रीवेङ्कटेश्वर" स्टीम् प्रेस,
खेतवाडी–मुंबई.

# जाहिरात.

| | की० रु. आ. |
|---|---|
| अन्योक्तिसंग्रहाध्यायः ... ... ... | १—० |
| अनेकविद्याकल्पनिरूपणाध्यायः... ... ... | १—० |
| उपासनास्तवक पूर्वार्द्ध सम्पूर्ण—इसमें १००अध्याय हैं, उनमें शिष्यगुरुलक्षण, दीक्षानिर्णय, अधिकारनिरूपण, चक्रशुद्धि, मन्त्रसंस्कार, बीजकोश, मुद्रालक्षण, भक्तिमहिमा, मन्त्र-यन्त्रोद्धार, यन्त्रप्रतिष्ठा और काम्यप्रयोग इत्यादि विषय हैं। यह पुस्तक अद्वितीय है. ... ... | ३०—० |
| उपोद्घातसृष्टिपरिभाषाध्यायः ... ... ... | १—० |
| ओषधीकल्पाध्यायः—इसमें जितने कल्प हैं सभी औषधे हैं | १—८ |

# अत्रेयमभ्यर्थना.

अस्माकं मुद्रणालये वेद-वेदान्त-धर्मशास्त्र-प्रयोग-योग-सांख्य-ज्योतिष-पुराणेतिहास-वैद्यक-मंत्रस्तोत्र-कोश-काव्य-चम्पू-नाटकालंकार-संगीत-नीति-कथाग्रन्थाः, बहवः स्त्रीणां चोपयुक्ता ग्रन्थाः, बृहज्ज्योतिषार्णवनामा बहुविचित्रितोऽयमपूर्वग्रन्थः संस्कृतभाषाया, हिन्दीमार्वाड्यन्यतरभाषाग्रन्थास्तत्तच्छास्त्राद्यर्थानुवादकाः, चित्राणि, पुस्तकमुद्रणोपयोगिन्यो यावत्यस्सामग्र्यः, स्वस्वलौकिकव्यवहारोपयोगिचित्रितालिखितपत्रवत्पुस्तकानि च मुद्रयित्वा प्रकाश्यन्ते सुलभेन मूल्येन विक्रयाय । येषां यत्राभिरुचिस्तत्तत्पुस्तकाद्युपलब्धये एवं नव्यतया स्तस्वपुस्तकानि सुमुद्रायिषुभिः सुलभयोग्यमौल्येन सीसकाक्षरैः स्वच्छोतमोत्तमपत्रेषु मुद्रिततत्पुस्तकानां स्वस्वसमयानुसारेणोपलब्धये च पत्रिकाद्वारा तैः प्रेरणीयोऽस्मि ।

गंगाविष्णु श्रीकृष्णदास,

“ लक्ष्मीवेंकटेश्वर ” स्टीम् मुद्रणालयाध्यक्ष, कल्याण—मुंबई.

## SHANKARA BHAGAVATPADA

अज्ञानान्तर्गहनपतितानात्मविद्योपदेशै–
स्त्रातुं लोकान् भवदवशिखातापपापच्यमानान् ।
मुक्त्वा मौनं वटविटपिनो मूलतो निःसरन्ती
शंभोर्मूर्तिश्चरति भुवने शंकराचार्यरूपा ॥

It is the form of Shambhu Himself which walks in the world as Shankaracharya, getting up from His seat under the banian tree breaking His silence, speaking the Vedantic wisdom of **Atma Vidya** to rescue the men of the world enveloped by **Ajnana** from the tormenting fires of life in this vale of tears.

—**Vidyaranya.**



# ATMARPANA

आत्मा त्वं गिरिजा मतिः परिजनाः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः।
संचारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरः
यद्यत्कर्म करोमि तत्तदखिलं शंभोस्तवाराधनम्॥

Thou art my Atman; my **buddhi** is Thy consort, the mountain-born; my **pranas** are Thy companions; my body is Thy temple; the way in which I enjoy the things of the senses is Thy worship; my sleep is the state of contemplation in Samadhi; my wanderings are **pradakshinas** of Thee; all that I talk is in praise of Thee; whatever I do, O Sambhu, is worship of Thee.

—Sankara Bhagavatpada.

## SALUTATION TO BUDDHA

नमो वेदरहस्याय नमस्ते वेदयोनये।
नमो बुद्धाय शुद्धाय नमस्ते ज्ञानरूपिणे ।।

Salutation to the pure Buddha, the essence of t
Veda, whose source of enlightenment is in the Ve
who is the embodiment of Jnana.

—Kurmapurana

## GOD, THE REFUGE

न यत्प्रसादायुतभागलेशमन्ये च देवा गुरवो जनाः स्वयम् ।
कर्तुं समेताः प्रभवन्ति पुंसस्तमीश्वरं त्वां शरणं प्रपद्ये ।।
त्वं सर्वलोकस्य सुहृत्प्रियेश्वरो ह्यात्मा गुरुर्ज्ञानमभीष्टसिद्धिः ।
तथापि लोको न भवन्तमन्धधी र्जानन्ति सन्तं हृदि बद्धकामः ।।

I take refuge in Thee, an infinitesimal part of Whose Grace not all divine beings, preceptors and others together can by themselves effect on the worshipper.

Thou indeed art the friend of the universe, beloved, Lord, **atman**, preceptor, knowledge, realisation of desires. Yet, the blind world, driven by desires, does not recognise Thee although ever present right in their hearts.